न आद्यं न मध्यं न अन्तं न मन्या, न द्रव्य न क्षेत्रं न दृष्टो न भावः।
न गुरुर्न शिष्यो न हीनं न दीनं, चिदानन्दरूपं नमो वीतरागम् ॥७॥
इदं ज्ञानरूपं स्वयं तत्ववेदी, न पूर्णं न शून्यं न चैत्यं स्वरूपी।
न चान्योन्यभिन्नं न परमार्थमेकं, चिदानन्दरूपं नमो वीतरागम् ॥८॥

आत्मारामगुणाकरं गुणनिधि चैतन्यरत्नाकरं,
सर्वे भूतगतागते सुखदुःखे ज्ञाते त्वया सर्वगे।
त्रैलोक्याधिपते स्वयंस्वमनसाध्यायन्तियोगीश्वरा,
वंदे ते हरिवंशहर्षहृदयं श्रीमान् हृदाभ्युद्यताम् ॥९॥

इति समाप्ता

– –

## अध्यात्माष्टकम्

विभावाद्य भावात्स्वभावं वहंतं, सुबोधिप्रकर्षाद बोधं दहन्तम्।
नयातीतरूपं नयाम्भोधि चन्द्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥१॥
वयादेय भावावना वेय दूरं, गुणानाम भावाद् गुणाम्भोधि पूरम्।
सुचारित्र चर्ये क्षणादाव निन्द्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥२॥
शुभंवा शुभं कर्म चैकं समस्तं, नयन्निश्चितं बंधबीजं निरस्तम्।
स्वभावाप्तिरस्य स्वयं चाप्यतन्द्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥३॥
द्रयं चा द्रयं वस्त्वं नित्यं च नित्यं, त्रिधालम्यमे तत्त्व वक्तव्य चिन्त्यम्।
लसत्सप्त भंगोर्मि माला समुद्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥४॥
कुतस्त्यो विरोधादि दोषावकाशो, ध्वनिः स्यादितिस्यादहोयत्प्रकाशः।
इतीत्थं वदन्तं प्रमाणा दरिद्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥५॥
प्रमाणं यतो द्वादशांगाख्य शास्त्रं, सुवक्तृत्वतो धर्म कर्मादि पात्रम्।
फलं वातपोद्रोर भूद्भूव्य भद्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥६॥
उपादान हाने फलं चाप्युपेक्षा, परैरन्यथा वादि भाने सुशिक्षा।
तदा भा सद्दक्त्वाच्चतेषाम् मद्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥७॥
अतुल्या अनन्ता गुणास्ताव कीना, सदोषा सतुच्छामतिर्माम कीना।
पदं प्राप्यमेता वतंवार्हमिद्रं, भजेहं जगज्जीवनं श्री जिनेन्द्रम् ॥८॥

वार्धाराद्यर्हंणा ते समगति सुखदातुष्टि पुष्टयादिकर्त्री,
दिव्या वागागमोत्या श्रुति सरणि गतानंत मिथ्यात्वहर्त्री।
रागद्वेषादि मुक्तो मुनिरिह विदितः शुद्धबोधाशयालुः,
जंन्मां होवारणात्कंस्तवमिमम सृजद्वादिराजो दयालुः ॥६॥

— इति श्री वादिराज विरचितम् अध्यात्माष्टक स्तोत्रम्—

## श्री महावीराष्टक स्तोत्र

छंद शिखरिणि

यदीये चैतन्ये मुकुर इव भावाश्चिदचितः,
समंभांति ध्रौव्यव्ययजनिलसंतोंतरहिताः।
जगत्साक्षी मार्गप्रकटनपरो भानुरिवयो
महावीरस्वामी नयनपथगामो भवतु मे (नः) ॥१॥

अताम्रं यच्चक्षुः कमल युगलं स्पंदरहितं,
जनान्कोपापायं प्रकटयति वाभ्यंतरमपि।
स्फुटंमूर्तिर्यस्य प्रशमितमयी वातिविमला,
महावीरस्वामी नयनपथगामी भवतु मे (नः) ॥२॥

नमन्नाकेन्द्राली मुकुटमणिभाजालजटिलं,
लसत्पादांभोजद्वयमिह यदीयं तनुभृतां।
भवज्ज्वालाशांत्यै प्रभवति जलंवा स्मृतमपि,
महावीरस्वामी नयनपथगामीभवतु मे (नः) ॥३॥

यदर्च्चाभावेन प्रमुदितमना दर्दुर इह,
क्षणादासीत्स्वर्गी गुणगणसमृद्धः सुखनिधिः।
लभंते सद्भक्ताः शिवसुखसमाजं किमुदता ?
महावीरस्वामी नयनपथगामी भवतुमे (नः) ॥४॥

कनत्स्वर्णाभासोऽप्य पगततनुर्ज्ञान निवहो,
विचित्रात्माप्येको नृपतिवरसिद्धार्थतनयः।
अजन्मापि श्रीमान् विगतभवरागोद्भुतगतिर्,
महावीरस्वामी नयनपथगामी भवतु मे (नः) ॥५॥

यदीया वाग्गंगा विविधनयकल्लोलविमला,
बृहज्ज्ञानांभोभिर्जगति जनतां यास्नपयति ।
इदानीमप्येषा बुधजनमरालैः परिचिता,
महावीरस्वामी नयनपथगामी भवतु मे (नः) ॥६॥

अनिर्वारोद्रेकस्त्रिभुवनजयी काम सुभटः।
कुमारावस्थायामपि निजवलाद्येन विजितः।
स्फुरन्नित्यानंदप्रशमपदराज्याय स जिनः,
महावीरस्वामी नयनपथगामी भवतु मे (नः) ॥७॥

महामोहांतक प्रशमनपराकस्मिकभिषग्,
निरापेक्षो बंधुर्विदितमहिमा मंगलकरः ।
शरण्यः साधूनां भवभयभृतामुत्तमगुणो,
महावीरस्वामी नयनपथगामी भवतु मे (नः) ॥८॥

महावीराष्टकं स्तोत्रं भक्त्या भागेन्दुना कृतं,
यःपठेच्छ्रणुयाच्चापि स याति परमां गतिं ॥९॥

—समाप्तम्—

## अथ श्री सरस्वती स्तोत्रं

चंद्रार्क्ककोटिघटितोज्ज्वल दिव्यमूर्ते, शुभ्र वस्त्रेश्रीचन्द्रिकाकलितनिर्मलसुप्रभासी ।
कामार्त्थदायि कलहंस समाधिरूढे, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥१॥
देवा सुरेन्द्र नत मौलि मणि प्ररोचिः, श्री मञ्जरीनिविड रञ्जितपाद पद्मे ।
नीलालके प्रमदहस्त समान याने, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥२॥
केयूर हार मणि कुण्डल मुद्रिकाद्ये, सर्वांगभूषण नरेन्द्र मुनीन्द्र वन्द्ये ।
नाना सु रत्न वर निर्मल मौलि युक्ते, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥३॥
मंजीर कोत्कनक कंकण किंकणीना, तेषां सुझंकृतरवेण विराजमाने ।
सद्धर्म वारि निधि संतत वर्द्धमाने, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥४॥
कंकेलि पल्लव विनिन्दित पाणि युग्मे, पद्मासने दिवस पद्म समान वक्त्रे ।
जैनेन्द्र वक्त्र भव दिव्य समस्त भाषे, वागीश्वरि प्रति दिनं मम रक्ष देवि ॥५॥

अर्द्धेन्दु मण्डित जटा ललित स्वरूपे, शास्त्र प्रकाशिनि समस्त कलाधिनाथे।
उन्मुद्रिका जपसरा भय पुस्तकान्ते, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥६॥
डिण्डीरपिण्ड हिमशंख तुषारहारे, पूर्णेन्दु विम्वरुचिशोभित दिव्य गात्रे।
चाञ्चल्यमान मृगशाव ललाट नेत्रे, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥७॥
सर्व पवित्रकरणोन्नत काम रूपे, नित्यं फणीन्द्र गरुड़ाधिपकिन्नरेन्द्र।
विद्याधरेन्द्र सुर यक्ष समस्त वन्द्ये, वागीश्वरि प्रतिदिनं मम रक्ष देवि ॥८॥

सम्पूर्णम्

# श्री सरस्वती स्तोत्रम् (द्वितीय)

सरस्वत्याःप्रसादेन काव्यंकुर्वन्ति मानवाः। तस्मान्निश्चल भावेनपूजनियासरस्वती ॥१॥
श्रीसर्वज्ञमुखोत्पन्न भारती बहु भाषिणी। अज्ञानतिमिरंहन्ति विद्या बहुविकासिनी ॥२॥
सरस्वती मया दृष्टा विद्याकमल लोचनी। हंमस्कन्ध समारूढावेणीपुस्तकधारिणी ॥३॥
प्रथमं भारती नाम द्वितीय च सरस्पती। तृतीयं शारदादेवी चतुर्थं हंस गामिनी ॥४॥
पंचमंविदुषां माता षष्टं वागीश्वरी तथा। कौमारीसप्तमं प्रोक्ताअष्टमंब्रह्मचारिणी ॥५॥
नवमं च जगन्माता दशमं ब्रह्मणी भवेत्। एकादशं तु ब्रह्माणी द्वादशं वरदा तथा ॥६॥
वाणी त्रयोदशं माय भाषा चैव चतुर्दशं। पंचदशं श्रुतदेवी षोडशंगौर्निगद्यते ॥७॥
एतानि श्रुतनामानि प्रातरूत्थाय यःपठेत्। तस्मिन्सन्तुष्यतीदेवीशारदावरदाभवेत् ॥८॥
सरस्वति नमस्तुभ्यं वरदे कामरूपिणी। विद्यारम्भंकरिष्यामि सिद्धिर्भवतुमे सदा ॥९॥

॥ समाप्ता. ॥

# श्री पार्श्वनाथ स्तोत्रम्

(अपरनाम--लक्ष्मीस्तोत्र)

लक्ष्मीर्महस्तुल्य सती सती सती। प्रवृद्धकालो विरतो रतो रतो ॥
जरारुजा जन्म हता हता हता। पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥१॥
अर्च्चेय् माद्यं सुमना मना मना। यः सर्वदेशो भुविना विना विना ॥
समस्त विज्ञान मयो मयो मयो। पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥२॥

विनेष्ट जंतोः शरणं रणं रणं। क्षमादितो यः कमठं मठं मठं ॥
नरामराराम क्रमं क्रमं क्रमं। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥३॥
अज्ञान सत्काम लता लता लता। यदीय सद्भावनता नता नता ॥
निर्वाण सौख्यं सुगता गता गता। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥४॥
विवादिता शेर्षविधि विधौ विधौ। बंभूव सर्प्यावहरी हरी हरी ॥
त्रिज्ञान सज्ञान हरो हरो हरो। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥५॥
यद्विश्व लोकैक गुरुं गुरुं गुरुं। विराजिता येन वरं वरं वरं ॥
तमाल नीलांग भरं भरं भरं। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥६॥
संरक्षितो दिग्भुवनं वनं वनं। विराजिता येषु दिवै दिवै दिवैः ॥
पाद द्वये नूत सुरासुराः सुराः। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥७॥
रराज नित्यं सकला कला कला। ममारतृष्णो वृजिनो जिनो जिनो ॥
संहार पूज्यं वृषभा सभा सभा। पार्श्व फणे रामगिरौ गिरौ गिरौ ॥८॥

तर्के व्याकरणे च नाटक चये काव्याकुले कौशले।
विख्यातो भुवि पद्मनंदि मुनिपस्तत्वस्य कोषं निधिः ॥
गंभिरं यमकाष्टकं पठति यः संस्तूयसा लभ्यते।
श्री पद्मप्रभदेव निर्मितमिदं स्तोत्रं जगन्मंगलं ॥९॥

---समाप्तम्---

## अकलंक स्तोत्र

त्रैलोक्यं सकलं त्रिकाल विषयं सालोकमा लोकितम्।
साक्षाद्येन यथा स्वयं करतले रेखात्रयं सांगुलिम् ॥
रागद्वेष भया भयान्तक जरा लोलत्व लोभादयो।
नालं यत्पदलंघनाय स महादेवो मया वंद्यते ॥१॥

दग्धं येन पुर त्रयं शरभवा तीव्रार्चिषा वह्निना।
यो वा नृत्यति मत्तवप्तितृवने यस्यात्मजोवागुहः ॥
सोऽयं किं मम शंकरो भय तृषारोषार्ति मोहक्षयं।
कृत्वा यः स तु सर्वं वित्तनु भृतां क्षेमंकरः शंकर ॥२॥

यत्नाद्येन विदारितं कररुहे दैत्येन्द्र वक्षःस्थलम्।
सारथ्येन धनंजयस्य समरे योऽमारयत्कौरवान्॥
नासौ विष्णुरनेक काल विषयं यज्ज्ञान मव्याहतम्।
विश्वं व्याप्य विजृंभते सतुमहा विष्णुः सदेष्टोमम॥३॥

उर्वश्यामुदपादि रागबहुलं चेतो यदीयं पुनः।
पात्री दंड कमण्डलु प्रभृतयो यस्या कृतार्थं स्थितिम्॥
आविर्भाव यितुं भवंतिस कथं ब्रह्मा भवेन्मादृशाम्।
क्षुत्तृष्णा श्रमराग रोग रहितो ब्रह्मा कृतार्थोऽस्तुनः॥४॥

योजग्ध्वापिशित समत्स्यकवल जीवं च शून्यंवदन्।
कर्त्ता कर्म फलं न भुंक्त इतियो वक्ता सबुद्धः कथम्॥
यज्ज्ञानं क्षणवर्त्तिवस्तुसकलं ज्ञातुं न शक्तं सदा।
यो जानन्युगपज्जगत्त्रयमिदं साक्षात्सबुद्धो मम॥५॥

इशः किं छिन्नलिंगो यदि विगतभयः शूलपाणिः कथं स्यात्।
नाथः किं भैक्ष्यचारी यतिरिति स कथं साँगना सात्मजश्च॥
आर्द्राजः किंत्वजन्मा सकल विदिति किं वेत्ति नात्मान्तरायं।
संक्षेपात्सम्यगुक्तं पशुपतिम पशुः कोऽत्र धीमानुपास्ते॥६॥

ब्रह्माचर्माक्षसूत्री सुरयुवतिरसावेश विभ्रान्तचेताः।
शम्भुः खट्वांग धारी गिरिपति तनया पांगलीलानुविद्धः॥
विष्णुश्चक्राधिपः सन्दुहितरमगमद् गोपनाथस्य मोहाद्।
अर्हन्विध्वस्तरागो जितसकल भयः कोऽयमेष्वाप्त नाथः॥७॥

एको नृत्यति विप्रसार्य कुकुमां चक्रे सहस्रं भुजा-,
नेकः शेष भुजंग भोगशयने व्यादाय निद्रायते।
दृष्टुं चारुतिलोत्तमा मुखमगादेकश्चतुर्वक्त्रता-,
मेते मुक्तिपथं वदंति विदुषा मित्येतदत्यद्भुतम्॥८॥

यो विश्वं वेद वद्यं जनन जलनिधेर्भंगिनः पारदृश्वा।
पौर्वापर्याविरुद्धं वचनमनुपमं निष्कलंकं यदीयम्॥
तं वंदे साधुवंद्यं सकलगुणनिधिं ध्वस्तदोषद्विषंतं।
बुद्धं वा वर्द्धमानं शतदलनिलयं केशवंवा शिवंवा॥९॥

माया नास्तिजटा कपाल मुकुटं चन्द्रोन मूर्द्धावली।
खट्वांगं न च वासुकिर्न च धनुः शूलं न चोग्रं मुखम्॥
कामो यस्य न कामिनी न च वृषो गीतं न नृत्यं पुनः।
सोऽस्मान्पातु निरंजनो जिनपतिः सर्वत्र सूक्ष्मः शिवः॥१०॥

नो ब्रह्मांकित भूतलं न च हरेः शम्भोर्न मुद्रांकितं।
नो चन्द्रावर्क करांकितं सुरपतेर्वज्रांकितं नैव च॥
षड्वक्त्रांकित बौद्ध देव हुत भुग्यक्षोर गैर्नांकितं।
नग्नं पश्यत वादिनो जगदिदं जैनेन्द्र मुद्रांकितं॥११॥

मौञ्जीदंड कमण्डलु प्रभृतयो नो लाञ्छन ब्रह्मणो।
रुद्रस्यापि जटा कपाल मुकुटं कोपीन खट्वांग ना॥
विष्णोश्चक्र गदादि शंखमतुलं बुद्धस्य रक्ताम्बरं।
नग्नं पश्यत वादिनो जगदिदं जैनेन्द्र मुद्रांकितम्॥१२॥

नाहंकार वशी कृतेन मनसा ना द्वेषिणा केवलं।
नैरात्म्यं प्रतिपद्य नश्यति जने कारुण्य बुद्ध्या मया॥
राज्ञः श्री हिमशीतलस्य सदसि प्रायो विदग्धात्मनो।
बौद्धौधान्सकलान् विजित्य सघटः पादेन विस्फालितः॥१३॥

खट्वांगंनैव हस्ते न च हृदिरचिता लम्बते मुण्डमाला।
भस्मांगं नैव शूलं न च गिरिदुहिता नैव हस्ते कपालं॥
चन्द्रार्द्धं नैव मूर्द्धन्यपि वृषगमनं नैव कण्ठे फणीन्द्रः।
तं वन्दे त्यक्त दोषं भवभयमथनं चेश्वरं देवदेवं॥१४॥

किं वाद्यो भगवानमेयमहिमा देवोऽकलंकः कलौ।
काले योजनता सुधर्म निहितो देवोऽकलंको जिनः॥
यस्य स्फार विवेक मुद्रलहरी जाले ऽप्रमेयाकुला।
निर्मग्ना तनुतेतरां भगवती ताराशिरः कम्पनम्॥१५॥

सा तारा खलु देवता भगवती मन्या पिमन्यामहे।
षण्मासावधि जाड्य सांख्य भगवद्भट्टाकलंक प्रभोः॥
वाकल्लोल परम्पराभिरमते नूनं मनोमज्जन।
व्यापारं सहतेस्म विस्मित मतिः सन्ताडिते तस्ततः॥१६॥

इति श्री अकलंकस्तोत्र सम्पूर्णम्

## ।।।।।। अथ चैत्य वंदना प्रारम्भः ।।।।।।

सद्भक्त्या देवलोके रविशशि भुवने व्यंतराणां निकाये।
नक्षत्राणां निवासे ग्रहगण पटले तारकाणां विमाने ।।
पाताले पन्नगेंद्रे स्फुटमणि किरणे ध्वस्त मिथ्यांध कारे।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वन्दे ।।१।।

वैताढ्येमेरुशृंगे रुचक गिरिवरे कुण्डले हस्ति दन्ते।
वक्षारे कूट नंदीश्वर कनक गिरौ नैषधे नीलवन्ते ।।
चित्रे शैले विचित्रे यमक गिरिवरे चक्रवाले हिमाद्रौ।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।२।।

श्री शैले विन्ध्य शृंगे विमल गिरिवरेह्यर्बुदे पावके वा।
सम्मेदे तारके वा कुलगिरि शिखरेऽष्टापदे स्वर्ण शैले ।।
संह्याद्रौ वैजयन्ते विपुल गिरिवरे गुर्जरेरोहणाद्रौ।
श्रीमत्तीर्थंकराणां प्रतिदिवस महं तत्र चैत्यानि वंदे ।।३।।

आषाढे मेदपाटे क्षितितट मुकटे चित्रकूटे चलाटे।
नाटे घाटे च वाटे विघनवर तटे देव कूटे विराटे ।।
कर्नाटे हेमकूटे विकटतर कटे चक्र कोटे च भोटे।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।४।।

श्रीमाले मालवे वा मलयति निखिले मेखले पीठले वा।
नेपाले नाहले वा कुवलय तिलके सिंहले मेखले वा ।।
डाहाले कौशले वाविगलित सलिले जंगले मालले वा।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।५।।

अंगे वंगे कलिंगे सुगत जनपदे सत्प्रयागेऽतिगंगे।
गौडे चौडे पुरंध्रे वर तरद्रविडे उद्रयाणे च मुद्रे ।।
आद्रे माले पुलिन्द्रे द्रवल कुवलये कर्ण कुब्जे सुराष्ट्रे।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।६।।

चम्पायां चन्द्रमुख्यां गजपुर मथुरा पत्तने चोज्जयिन्याम् ।
कौशंब्यां कौशलायाँ कनकपुर वरे देवगिर्यां च काश्यां ।।
नशिक्ये राजगेहे दशपुर नगरे भद्रडे ताम लिप्त्यां ।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।७।।

स्वर्गेमर्त्येऽन्तरिक्षे गिरि शिखर ह्रदे स्वर्नदी नीर तीरे ।
शैलाग्रे नागलोके जलनिधि पुलिनेंऽभोरुहाणां निकुंजे ।।
ग्रामेऽरण्ये वने वा स्थलजल विषमे दुर्गं मध्यें ति संध्ये ।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।८।।

इत्थं श्री जैन चैत्यं स्तुति मति मनसां भक्ति भाजां प्रसिद्धं ।
प्रोद्यत्कल्याण हेतुः कलिमल हरणं ये पठंति त्रिसंध्यं ।।
तेषां श्री तीर्थयात्रा फलम तुलमलं जायते मानवानां ।
श्रीमत्तीर्थंकराणां प्रति दिवस महं तत्र चैत्यानि वंदे ।।९।।

—समाप्त—

## —: श्री जिन सहस्र नाम स्तोत्रं :—

( श्री जिनसेनाचार्य कृत )

स्वयंभुवे नमस्तुभ्य मुत्पाद्यात्मानमात्मनि ।
स्वात्मनैव तथोद्भूतंवृत्तये चित्तवृत्तये ।।१।।
नमस्ते जगतां पत्ये लक्ष्मी भर्त्रे नमो नमः ।
विदांबर नमस्तुभ्यं नमस्ते वदतांबर ।।२।।

कामशत्रुहणं देव मामनंति मनीषिणः ।
त्वामानुमः सुरैमौं लिस्रग्मालाभ्यर्चितक्रमम्।।३।।
ध्यानदुर्घणनिर्भिन्नः घनघातीमहातरूः ।
अनंत भव संतान जयोप्यासीरनंतजित् ।।४।।

त्रैलोक्य विजयेनोप्त दुर्दर्पमतिदुर्जयं ।
मृत्युराजं विजित्यासीज्जन्ममृत्युं जयोभवान् ।।५।।
विधूताशेषसंसारो बंधुर्नोभव्यबांधवः ।
त्रिपुरारिस्त्वमीशोसि जन्ममृत्युजरांतकृत् ।।६।।

त्रिकालविषयाशेषतत्त्वभेदात् त्रिधोच्छिदं।
केवलाख्यं दधच्चक्षुस्त्रिनेत्रोसि त्वमीशिता ॥७॥
त्वामंध कांतकं प्राहुर्मोहांध सुर मर्द्दनात्।
अर्द्धन्ते नारयो यस्मादर्धनारीश्वरोस्यत ॥८॥

शिवः शिवपदाध्यासाद् दुरितारिहरो हरः।
शंकरः कृतशं लोके संभवस्त्व भवन्मुखे ॥९॥
वृषभोसि जगज्ज्येष्टः गुरुर्गुरु गुणोदयैः।
नाभेयो नाभिसंभूतेरिक्ष्वाकुःकुलनंदनः ॥१०॥

त्वमेकः पुरुषस्कंधस्त्वं द्वे लोकस्य लोचने।
त्वं त्रिधाबुधसन्मार्गस्त्रिज्ञस्त्रिज्ञान धारकः ॥११॥
चतुःशरण मांगल्यमूर्तिस्त्वं चतुरहः सुधीः।
पंचब्रह्ममयो देवः पावनस्त्वं पुनीह माम् ॥१२॥

स्वर्गाव तारणे तुभ्यं सद्योजातात्मने नमः।
जन्माभिषेकवामाय वामदेव नमोस्तुते ॥१३॥
सुनिःक्रांताय घोराय परं प्रशमसीयुषे।
केवलज्ञानसंसिद्ध विषाणाय नमोस्तुते ॥१४॥

पुरु स्तुत् पुरुष स्तुभ्यं विमुक्तपदभागिने।
नमस्तत्पुरुषावस्थां भावनानघं विभ्रते ॥१५॥
ज्ञानावरण निर्हासान्नमस्ते नंतचक्षुषे।
दर्शनावरणोच्छेदान्नमस्ते विश्वदर्शिने ॥१६॥

नमो दर्शनमोहघ्नेज्ञायिकामलदृष्टये।
नमश्चारित्रमोहघ्ने विरागाय महौजसे ॥१७॥
नमस्तेऽनंतवीर्याय नमोनंतसुखाय ते।
नमस्तेअनंतलोकाय लोकालोकविलोकिने ॥१८॥

नमस्तेऽनंतदानाय नमस्तेऽनंतलब्धये।
नमस्तेऽनंतभोगाय नमो ऽनंतोय भोगिने ॥१९॥
नमः परम योगाय नमस्तुभ्यमयोनये।
नमः परमपूताय नमस्ते परमर्षये ॥२०॥

नमः परमविद्याय नमः परमतच्छिदे ।
नमः परमतत्त्वाय नमस्ते परमात्मने ॥२१॥
नमः परमरूपाय नमः परमतेजसे ।
नमः परममार्गाय नमस्ते परमेष्टिने ॥२२॥

परमर्द्धिजुषे धाम्ने परमज्योतिषे नमः।
नमः पारेतमः प्राप्तधाम्ने ते परमात्मने ॥२३॥
नमः क्षीणकलंकाय क्षीणबंध नमोस्तुते ।
नमस्ते क्षीणमोहाय क्षीणदोषाय ते नमः ॥२४॥

नमः सुगतये तुभ्यं शोभनांगतमीयुषे ।
नमस्तेतीन्द्रियज्ञान सुखायानिंद्रियात्मने ॥२५॥
कायबंधननिर्मोक्षाद कायाय नमोस्तु ते ।
नमस्तुभ्यमयोगाय योगिनामपि योगिने ॥२६॥

अवेदाय नमस्तुभ्यमकषायायते नमः।
नमः परम योगीन्द्रवंदितांध्रि द्वयायते ॥२७॥
नमः परमविज्ञान नमः परम संयम ।
नमः परमदृग्दृष्ट परमार्थाय तेनमः ॥२८॥

नमस्तुभ्यमलेश्याय शुल्क लेशांशकस्पृशे ।
नमो भव्ये तरावस्था व्यतीताय विमोक्षणे ॥२९॥
संज्ञा सज्ञिद्वयावस्था व्यतिरिक्तामलात्मने ।
नमस्ते वीतसंज्ञाय नमः ज्ञायक दृष्टये ॥३०॥

अनाहाराय तृप्ताय नमः परम भाजुषे ।
व्यतीता शेषदोषाय भवाद्धं पारमीयुषे ॥३१॥
अजराय नमस्तुभ्यं नमस्ते ऽतीत जन्मने ।
अमृत्यवे नमस्तुभ्यंमचलायाक्षरात्मने ॥३२॥

अलमास्तांगुण स्तोत्रमनन्तास्ताव कागुणाः ।
त्वन्नामस्मृतिमात्रेण परमंशं प्रशास्महे ॥३३॥

इति प्रस्तावना

प्रसिद्धाष्ट सहस्रेद्ध लक्षणं त्वां गिरां पतिम्।
नाम्नाष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये ॥१॥

श्रीमान्यस्वयंभू र्वृषभः शंभवः शंभुरात्मभूः।
स्वयंप्रभः प्रभुर्भोक्ता विश्वभूरपुनर्भवः ॥२॥

विश्वात्मा विश्वलोकेशो विश्वतश्चक्षुरक्षरः।
विश्वविद्विश्वविद्येशो विश्वयोनिरनीश्वरः ॥३॥

विश्वदृश्वा विभुर्धाता विश्वेशो विश्वलोचनः।
विश्व व्यापी विधिर्वेधाः शाश्वतो विश्वतोमुखः ॥४॥

विश्वकर्मा जगज्जेष्टो विश्वमूर्तिर्जिनेश्वरः।
विश्व दृग्विश्वभूतेशो विश्वज्योतिरनीश्वरः ॥५॥

जिनो जिष्णुरमेयात्मा विश्वरीशो जगत्पतिः।
अनन्तचिदचिन्त्यात्मा भव्य बन्धुर बन्धनः ॥६॥

युगादिपुरुषो ब्रह्मा पञ्च ब्रह्ममयः शिवः।
परः परतरः सूक्ष्मः परमेष्टी सनातनः ॥७॥

स्वयं ज्योतिरजोऽजन्मा ब्रह्मयोनिरयोनिजः।
मोहारिविजयी जेता धर्मचक्री दयाध्वजः ॥८॥

प्रशान्तारिरनन्तात्मा योगी योगीश्वरार्चितः।
ब्रह्म विद्ब्रह्म तत्त्वज्ञो ब्रह्मोद्याविद्यतीश्वरः ॥९॥

सिद्धो बुद्धः प्रबुद्धात्मा सिद्धार्थः सिद्धशासनः।
सिद्धः सिद्धान्तविद्ध्येयः सिद्ध साध्यो जगद्धितः ॥१०॥

सहिष्णुरच्युतोऽनतः प्रभविष्णुर्भवोद्भव।
प्रभूष्णुरजरोऽजर्यो भ्राजिष्णुर्धीश्वरोऽव्ययः ॥११॥

विभावसुरसंभूष्णुः स्वयं भूष्णुः पुरातनः।
परमात्मा परंज्योतिस्त्रि जगत्परमेश्वरः ॥१२॥

॥ इति श्रीमदादिशतम् ॥१॥



दिव्य भाषापतिर्दिव्यः पूतवाक्पूतशासनः।
पूतात्मा परमज्योतिर्धर्माध्यक्षो दमीश्वरः ॥१॥
श्रीपति र्भगवानर्हन्नर जाविरजाः शुचिः।
तीर्थंकृत्केवलीशानः पूजार्ह स्नातकोऽमलः ॥२॥
अनंतदीप्तिर्ज्ञानात्मा स्वयंबुद्धः प्रजापतिः।
मुक्तः शक्तो निराबाधो निष्कलोभुवनेश्वरः ॥३॥
निरंजनो जगज्ज्योति र्निरुक्तोक्तिर्निरामयः।
अचलस्थितिरक्षोभ्यः कूटस्थः स्थाणुरक्षयः ॥४॥
अग्रणीर्ग्रामणीर्नेता प्रणेता न्यायशास्त्रकृत्।
शास्ता धर्मपतिर्द्धर्म्यो धर्मात्मा धर्मतीर्थकृत् ॥५॥
वृषध्वजो वृषाधीशो वृषकेतुर्वृषायुधः।
वृषो वृषपतिर्भर्ता वृषाभांको वृषोद्भवः ॥६॥
हिरण्यनाभिर्भूतात्मा भूतभृद्भूतभावनः।
प्रभवोविभवोभास्वान्भवोभावो भवांतकः ॥ ७॥
हिरण्यगर्भः श्रीगर्भः प्रभूतविभवोद्भवः।
स्वयं प्रभुः प्रभूतात्मा भूतनाथो जगत्प्रभुः ॥८॥
सर्वादिः सर्वदृक् सार्वः सर्वज्ञः सर्वदर्शनः।
सर्वात्मा सर्व लोकेशः सर्ववित्सर्वलोकाजित् ॥९॥
सुगतिः सुश्रुतः सुश्रुक् सूरिवहुश्रुतः।
विश्रुतो विश्वतः पादो विश्वशीर्षः शुचिश्रवाः ॥१०॥
सहस्रशीर्षः क्षेत्रज्ञः सहस्राक्षः सहस्रपात्।
भूतभव्यभवद्भर्ता विश्वविद्या महेश्वरः ॥११॥

इति दिव्यादिशतम् ॥२॥

स्थविष्टः स्थविरो जेष्टः पृष्टःपृष्टो वरिष्टधीः।
स्थेष्टो गरिष्टोबंहिष्टःश्रेष्टो निष्टो गरिष्टगीः ॥१॥
विश्वभृद्विश्वसृट विश्वेट् विश्वभुग्विश्वनायकः।
विश्वाशीर्विश्वरूपात्मा विश्वजिद्विजितांतकः ॥२॥

विभवो विभयो वीरो विशोको विजरो जरन।
विरागो विरतो संगो विविक्तो वीतमत्सरः ॥ ३ ॥
विनेय जनता बन्धुविलीना शेष कल्मषः।
वियोगो योग विद्विद्वान्विधाता सुविधिः सुधीः ॥ ४ ॥

क्षान्ति भाक्पृथिवी मूर्तिः शान्ति भाक् सलिलात्मकः।
वायु मूर्तिर संगात्मा वह्निमूर्तिर धर्म धृक् ॥५॥
सुयज्वा यज मानात्मा सुत्वा सुत्राम पूजितः।
ऋत्विग्यज्ञ पतिर्यज्ञो यज्ञांगम मृतं हविः ॥६॥

व्योम मूर्तिर मूर्तात्मा निर्लेपो निर्मलोऽचलः।
सोम मूर्तिः सुसौम्यात्मा सूर्य मूर्तिर्महाप्रभः ॥७॥
मंत्रविन्मन्त्र कृन्मन्त्रो मन्त्र मूर्तिरनन्तकः।
स्वतन्त्रस्तन्त्रकृत्स्वान्तः कृतान्तान्तःकृतान्तकृत् ॥८॥

कृती कृतार्थः सत्कृत्यः कृत कृत्यः कुत ऋतुः।
नित्यो मृत्युं जयो मृत्युर मृतात्मामृतोद्भवः ॥९॥
ब्रह्मनिष्टः परंब्रह्म ब्रह्मात्मा ब्रह्म सम्भवः।
महाब्रह्म पतिर्ब्रह्मेट् महाब्रह्म पदेश्वरः ॥१०॥

सु प्रसन्नः प्रसन्नात्मा ज्ञानधर्म दमप्रभुः।
प्रशमात्मा प्रशान्तात्मा पुराण पुरुषोत्तमः ॥११॥

—इति स्थविष्टादिशतम् ॥३॥—

महाशोक ध्वजो शोकः कः सृष्टा पद्म विष्टरः।
पद्मेशः पद्मसम्भूतिः पद्मनाभिरनुत्तरः ॥१॥
पद्म योनिर्जगद्यो नि रित्यः स्तुत्यः स्तुतीश्वरः।
स्तवनार्हो हृषी केशो जितजेयः कृत क्रियः ॥२॥

गणाधिपो गणज्येष्टो गण्यः पुण्यो गणाग्रणीः।
गुणाकरो गुणाम्भोधि र्गुणज्ञो गुण नायकः ॥३॥
गुणादरी गुणोच्छेदी निर्गुणः पुण्यगीर्गुणः।
शरण्यः पुण्य वाक्पूतो वरेण्यः पुण्यनायकः ॥४॥

अगण्यः पुण्यधीर्गण्यः पुण्य कृत्पुण्य शासनः।
धर्मा रामो गुण ग्रामः पुण्यापुण्य निरोधकः ॥५॥
पापापेतो विपापात्मा विपात्मा वीत कल्मषः।
निर्द्वन्द्वो निर्मदः शान्तो निर्मोहो निरूपद्रवः ॥६॥
निर्निमेषो निराहारो निःक्रियो निरुपप्लवः।
निष्कलंको निरस्तैना निर्धूतांगो निरास्रवः ॥७॥
विशालो विपुल ज्योतिरतुलो चिन्त्य वैभवः।
सुसंवृत्तः सुगुप्तात्मा सुभृत्सुनय तत्त्ववित् ॥८॥
एक विद्यो महाविद्यो मुनिः परिवृढः पतिः।
धीशो विद्यानिधिः साक्षी विनेता विहितान्तकः ॥९॥
पिता पितामहः पाता पवित्रः पावनो गतिः।
त्राता भिषग्वरो वर्यो वरदः परमः पुमान् ॥१०॥
कविः पुराण पुरुषो वर्षीयान्वृषभः पुरुः।
प्रतिष्टा प्रसवो हेतुर्भुवनैक पितामहः ॥११॥

— इति महादि शतम् ॥४॥ —

श्री वृक्ष लक्षणः श्लक्ष्णो लक्षण्यः शुभ लक्षणः।
निरक्षः पुण्डरीकाक्षः पुष्कलः पुष्करे क्षणः ॥१॥
सिद्धिदः सिद्ध संकल्पः सिद्धात्मा सिद्धि साधनः।
बुद्ध बोध्यो महाबोधि वर्धमानो महर्द्धिकः ॥२॥
वेदांगो वेद विद्वेद्यो जात रूपो विदांवरः।
वेदवेद्यः स्व संवेद्यो विवेदो वदतांवरः ॥३॥
अनादि निधनो व्यक्तो व्यक्त वाग्व्यक्त शासनः।
युगादि कृद्युगाधारो युगादिर्जगदा दिजः ॥४॥
अतीन्द्रोऽतीन्द्रियो धीन्द्रो महेन्द्रोऽतीन्द्रियार्थदृक्।
अनिन्द्रियोऽहमिन्द्राच्यों महेन्द्र महितो महान् ॥५॥
उद्भवः कारणं कर्त्ता पारगो भव तारकः।
अगाह्यो गहनं गुह्यं परार्ध्यः परमेश्वरः ॥६॥

अनन्तर्द्धिरमे यर्द्धिरचिन्त्यर्द्धिः समग्रधीः ।
प्राग्र्यः प्राग्रहरोऽभ्यग्र्यः प्रत्यग्रोऽग्र योऽग्रिमोऽग्रजः ॥७॥
महातपा महातेजा महोदर्को महोदयः ।
महायशो महाधामा महासत्त्वो महाधृतिः ॥८॥
महाधर्यो महावीर्यो महासम्पन्महाबलः ।
महाशक्ति र्महाज्योति र्महाभूति र्महाद्युतिः ॥९॥
महामति र्महानीति र्महाक्षान्ति र्महोदयः ।
महाप्राज्ञो महाभागो महानन्दो महाकविः ॥१०॥
महा महा महाकीर्ति र्महाकांति र्महावपुः ।
महादानो महाज्ञानो महायोगो महागुणः ॥११॥
महामहपतिः प्राप्तमहाकल्याण पंचकः ।
महाप्रभु र्महाप्रातिहार्याधीशो महेश्वरः ॥१२॥
— इति वृक्षादिशतम् ॥५॥—

महामुनि र्महामौनी महाध्यानी महादमः ।
महाक्षमो महाशीलो महायज्ञो महामखः ॥१॥
महाव्रतपतिर्मह्यो महाकांति धरोऽधिपः ।
महामैत्री महामेयो महापायो महोदयः ॥२॥
महा कारुण्य कोमन्ता महामन्त्रो महायतिः ।
महानादो महाघोषो महेज्यो महसांपतिः ॥३॥
महाध्वरधरो धुर्यो महौदार्यो महिष्ट वाक् ।
महात्मा महसांधाम महर्षि र्महितोदयः ॥४॥
महाक्लेशांकुशः शूरो महाभूतपतिर्गुरुः ।
महापराक्रमोऽनन्तो महाक्रोध रिपुर्वशी ॥५॥
महाभवाब्धिसंतारि र्महामोहाद्रि सूदनः ।
महागुणाकरः क्षांतो महायोगीश्वरः शमी ॥६॥
महाध्यानपतिर्ध्याता महाधर्मा महाव्रतः ।
महाकर्मारिहात्मज्ञो महादेवो महेशिता ॥७॥

सर्वक्लेशापहः साधुः सर्वदोषहरो हरः।
असंख्येयोऽप्रमेयात्मा शमात्मा प्रशमाकरः॥

सर्वयोगीश्वरोऽचित्यः श्रुतात्मा विष्टरश्रवाः।
दांतात्मा दमतीर्थेशो योगात्मा ज्ञानसर्वगः॥९॥

प्रधानमात्मा प्रकृतिपरमः परमोदयः।
प्रक्षीणबंधः कामारिः क्षेमकृत्क्षेमशासनः॥१०॥

प्रणवः प्रणयः प्राणः प्राणदः प्रणतेश्वरः।
प्रमाणं प्रणिधिर्दक्षो दक्षिणोध्वर्युरध्वरः॥११॥

आनंदो नंदनो नंदो वंद्योनिंद्योऽभिनदनः।
कामहा कामदः काम्यः कामधेनुररिञ्जयः॥१२॥

—इति महामुन्यादिशतम् ॥६॥—

असंस्कृत सुसंस्कारः प्राकृतो वै कृतांतकृत।
अंतकृत्कांतगुः कांतश्चितामणिरभीष्टदः॥१॥

अजितो जितकामारिरमितोऽमितशासनः।
जितक्रोधो जितामित्रो जितक्लेशो जितांतकः॥२॥

जिनेन्द्रः परमानंदो मुनीन्द्रोदुन्दुभिस्वनः।
महेन्द्रवंद्यो योगीन्द्रो यतीन्द्रो नाभिनंदनः॥३॥

नाभेयो नाभिजो जातः सुव्रतो मनुरुत्तमः।
अभेद्योऽनत्ययोऽनश्वानधिकोऽधिगुरुः सुधीः॥४॥

सुमेधा विक्रमी स्वामी दुराधर्षो निरुत्सुकः।
विशिष्टः शिष्टभुक् शिष्टः प्रत्ययः कर्मणोऽनघः॥५॥

क्षेमी क्षेमंकरोऽक्षय्यः क्षेज्ञधर्मपतिः क्षमी।
अग्राह्यो ज्ञाननिग्राह्यो ध्तानगम्यो निरुत्तरः॥६॥

सुकृती धातुरिज्यार्हः सुनयश्चतुराननः।
श्रीनिवासश्चतुर्वक्त्र श्चतुरास्यश्चतुर्मुखः॥७॥

सत्यात्मा सत्यविज्ञानः सत्यवाक्सत्यशासनः।
सत्याशीः सत्यसंधानः सत्यः सत्यपरायणः॥८॥

स्थेयान्स्थ वीयान्ने दीयान्द वीयान्दूरदर्शनः।
अणोरणीयान नणुर्गुरुराद्यो गरीयसाम् ॥९॥
सदायोगः सदाभोगः सदातृप्तः सदाशिवः।
सदागतिः सदासौख्यः सदाविद्यः सदोदयः ॥१०॥
सुघोषः सुमुखः सौम्यः सुखदः सुहितः सुहृत्।
सुगुप्तागुप्ति भृद्गोप्ता लोकाध्यक्षो दमीश्वरः ॥११॥
—इति असंस्कृतादिशतम् ॥७॥—

बृहन्बृहस्पति र्वाग्मी वाचस्पति रुदारधीः।
मनीषीधिषणो धीमाञ्छे मुषीशो गिरांपतिः ॥१॥
नैकरूपो नयस्तुंगो नैकात्मा नैक धर्मकृत्।
अविज्ञेयोऽप्रतर्क्यात्मा कृतज्ञः कृतलक्षणः ॥२॥
ज्ञानगर्भो दयागर्भो रत्नगर्भः प्रभास्वरः।
पद्मगर्भो जगद्गर्भो हेमगर्भः सुदर्शनः ॥३॥
लक्ष्मी वांस्त्रिदशाध्यक्षो दृढीयानिन इशिता।
मनोहरो मनोज्ञांगो धीरो गम्भीरशासनः ॥४॥
धर्मयुपो दयायागो धर्मनेमिर्मुनीश्वरः।
धर्मचक्रायुधो देवः कर्महा धर्मघोषणः ॥५॥
अमोघवागमोघाज्ञो निर्मलोऽमोघशासनः।
सुरूपः सुभगस्त्यागी समयज्ञः समाहितः ॥६॥
सुस्थितःस्वास्थ्य भावस्थो नीरजस्को निरुद्धवः।
अलेपो निष्कलङ्कात्मा वीतरागो गतस्पृहः ॥७॥
वश्येन्द्रियो विमुक्तात्मा निःसपत्नो जितेन्द्रियः।
प्रशान्तोऽनन्त धामर्षिमंगलं मलहानघः ॥८॥
अनीदृगुपमाभूतो दृष्टिर्दैवमगोचरः।
अमूर्तो मूर्तिमानेको नैको नानैकतत्त्वदृक् ॥९॥
अध्यात्मगम्यो गम्यात्मा योगविद्योगि वन्दितः।
सर्वत्रगः सदाभावीत्रिकाल विषयार्थदृक् ॥१०॥

शंकरः शंवदो दान्तोदमी क्षान्तिपरायणः।
अधिपः परमानन्दः परात्मज्ञः परात्परः ॥११॥
त्रिजगद्वल्लभोऽभ्यर्च्य स्त्रिजगन्मंगलोदयः।
त्रिजगत्पतिपूजांघ्रि स्त्रिलोकाग्र शिखामणिः ॥१२॥

— इति बृहदादिशतम् ॥८॥ —

त्रिकालदर्शी लोकेशो लोकधाता दृढ़व्रतः।
सर्वलोकातिगः पूज्यः सर्वलोकैकसारथिः ॥१॥
पुराणपुरुषः पूर्वः कृतपूर्वांग विस्तरः।
आदिदेवः पुराणाद्यः पुरुदेवोऽधिदेवता ॥२॥

युगमुख्यो युगज्येष्टो युगादिस्थितिदेशकः।
कल्याणवर्णः कल्याणः कल्य कल्याणलक्षणः ॥३॥
कल्याणः प्रकृतिर्दीप्तः कल्याणात्मा विकल्मषः।
विकलंकः कलातीतः कलिलघ्नः कलाधरः ॥४॥

देवदेवो जगन्नाथो जगद्‌बंधुर्जगाद्विभुः।
जगद्धितैषी लोकज्ञः सर्वगोजगदग्रजः ॥५॥
चराचर गुरुर्गोप्यो गूढात्मा गूढगोचरः।
सद्योजातः प्रकाशात्मा ज्वलज्ज्वलनसप्रभः ॥६॥

आदित्य वर्णो भर्माभः सुप्रभः कनक प्रभः।
सुवर्ण वर्णो रूक्माभः सूर्य कोटि सम प्रभः ॥७॥
तपनीय निभस्तुंगो बालार्काभोऽनलप्रभः।
संध्याभ्रबभ्रुर्हेमाभस्तप्त चामीकरच्छविः ॥८॥

निष्टप्त कनकच्छायः कनत्कॉचनसन्निभः।
हिरण्यवर्णः स्वर्णाभः शातकुंभनिभप्रभः ॥९॥
द्युम्नभाजातरूपाभो दीप्तजाम्बूनदद्युतिः।
सुधौतकलधौतश्री प्रदीप्तो हाटकद्युतिः ॥१०॥

शिष्टेष्टः पुष्टिदः पुष्टःस्पष्टः स्पष्टाक्षरक्षमः।
शत्रुघ्नोप्रतिघोऽमोघःप्रशास्ताशासिता स्वभूः ॥११॥

शान्तिनिष्टो मुनिजेष्टः शिवतातिः शिवप्रदः।
शान्तिदः शान्तिकृच्छान्तिः कान्तिमान्कामितप्रदः ॥१२॥
श्रेयोनिधिरधिष्टानमप्रतिष्टः प्रतिष्ठितः।
सुस्थितः स्थावरः स्थाणुः प्रथीयान्प्रथितः पृथूः ॥१३॥

इति० त्रिकालदर्श्यादिशतम् ॥६॥

दिग्वासा वातरशनो निर्ग्रन्थेशो निरम्बरः।
निष्किञ्चनो निराशंसो ज्ञानचक्षुरमोमुहः ॥१॥
तेजोराशि रनन्तौजा ज्ञानाब्धिः शीलसागरः।
तेजोमयोऽमित ज्योति ज्योतिर्मूर्तिस्तमोऽपहः ॥२॥
जगच्चूडामणिर्दीप्तः सर्वविघ्न विनायकः।
कलिघ्नः कर्मशत्रुघ्नो लोकालोक प्रकाशकः ॥३॥
अनिद्रालु रतंद्रालु जागरूकः प्रमामयः।
लक्ष्मीपति र्जगज्ज्योति धर्मराजः प्रजाहितः ॥४॥
मुमुक्षुर्बन्ध मोक्षज्ञो जिताक्षो जितमन्मथः।
प्रशांतरसशैलूशो भव्यपेटक नाटकः ॥५॥
मूलकर्ताखिल ज्योतिर्मलघ्नो मूलकारणः।
आप्तो वागीश्वरः श्रेयाञ्छ्रायसोक्तिर्निरुक्तवाक् ॥६॥
प्रवक्ता वचसामीशो मारजिद्विश्वभाववित्।
सुतनुस्तनु निर्मुक्तः सुगतो हतदुर्नयः ॥७॥
श्रीशः श्रीश्रितपादाब्जो वीतभीरभयंकरः।
उत्पन्नदोषो निर्विघ्नो निश्चलो लोकवत्सलः॥८॥
लोकोत्तरो लोकपतिर्लोकचक्षुर पारधीः।
धीरधीर्बुद्ध सन्मार्गः शुद्धः सूनृतपूतवाक् ॥९॥
प्रज्ञापारमितः प्राज्ञो यतिर्नियमितेन्द्रियः।
भदन्तो भद्रकृद्भद्रः कल्पवृक्षो वरप्रदः ॥१०॥
समुन्मूलित कर्मारिः कर्मकाष्टाशु शुक्षणिः।
कर्मण्यः कर्मठः प्रांशुर्हेयादेय विचक्षणः ॥११॥

अनन्तशक्तिरच्छेद्यस्त्रिपुरारि स्त्रिलोचनः।
त्रिनेत्रस्त्र्यम्बकस्त्र्यक्षः केवलज्ञानवीक्षणः ॥१२॥

समंतभद्रः शांतारि धर्माचार्यो दयानिधिः।
सूक्ष्मदर्शी जितानंगः कृपालुर्धर्मदेशकः ॥१३॥
शुभंयुः सुखसाद् भूतः पुण्यराशिरनामयः।
धर्मपालो जगत्पालो धर्मसाम्राज्यनायकः ॥१४॥

इति दिग्वासादिशतम् ॥१०॥

धाम्नांपते तवामूनि नामान्यागम कोविदैः।
समुच्चितान्यनुध्यायन्पुमान्पूतस्कृति र्भवेत् ॥१॥
गोचरोऽपि गिरामासां त्वमवाग्गोचरो मतः।
स्तोतातथाप्यसंदिग्धंत्वत्तोऽभीष्टफलंभवेत् ॥२॥

त्वमतोऽसिजगद्बन्धुस्त्वमतोऽसिजगद्भिषक्।
त्वमतोऽसिजगद्धाता त्वमतोऽसि जगद्धितः ॥ ३ ॥
त्वमेकं जगतां ज्योतिस्त्वं द्विरूपोपयोगभाक्।
त्वं त्रिरूपैकमुक्त्यंगं सोतथानंतचतुष्टयः ॥४॥

त्वं पंचब्रह्मतत्त्वात्मा पंचकल्याण नायकः।
षड्भेद भाव तत्त्वज्ञस्त्वं सप्तनयसंग्रहः ॥५॥
दिव्याष्टगुणमूर्तिस्त्वं नवकेवल लब्धिकः।
दशावतारनिर्धार्यो मां पाहि परमेश्वर ॥६॥

युष्मन्ना मावलीदृब्धविल सत्स्तोत्रमालया।
भवंतं वरिवस्यामः प्रसीदानुगृहाण नः ॥७॥
इदं स्तोत्रमनुस्मृत्य पूतो भवति त्राक्तिकः।
यः स पाठं पठत्येनं स स्यात्कल्याणभाजनम् ॥८॥

ततः सदेदं पुण्यार्थी पुमान्पठति पुण्यधीः।
पौरुहूतीं श्रियं प्राप्तुं परमामभिलाषुकः ॥९॥
स्तुत्वेति मघवा देवं चराचरजगद्गुरुम्।
ततस्तीर्थविहारस्यव्यधात्प्रस्तावनामिमाम् ॥१०॥

स्तुतिः पुण्यगुणोत्कीर्तिः स्तोता भव्यः प्रसन्नधीः ।
निष्ठितार्थो भवान्स्तुत्यः फलं नैश्रेयसं सुखम् ॥११॥

यः स्तुत्यो जगतांत्रयस्य न पुनस्तोता स्वयं कस्यचित् ।
.ध्येयो योगिजनस्ययश्चनितरांध्याता स्वयं कस्यचित् ॥
यो नेतृनपिते नमन्नत मलंनन्त व्ययक्षेक्षणः ।
सश्रीमाञ्जगतां त्रयस्य च गुरुर्देवः पुरुः पावनः ॥१२॥

तं देवं त्रिदशाधिपार्चित पदं घातिक्षयानन्तरं ।
प्रोत्थानन्त चतुष्टयं जिनमिमं मव्याब्ज नीनामिनम् ॥
मानस्तम्भ विलोकना नतजगन्मान्यं त्रिलोकी पति ।
प्राप्ताचिन्त्य बर्हिविभूतिमनघं भक्त्याप्रवन्दा महे ॥१३॥

—इति धाम्ना० शतम् ॥११॥—

* जिन सहस्रनाम स्तोत्रम् मपूर्णम् *

ॐ

# —: भक्तामर स्तोत्रम् :—

— श्री मानतुगाचार्य विरचितं —

भक्तामर प्रणत मौलिमणि प्रभाणा, मुद्योतकं दलित पाप- तमो- वितानम् ।
सम्यक्प्रणम्य जिन—पाद—युगं युगादा, वालम्वनं भव-जले पततां जनानाम् ॥१॥
यः संस्तुतः सकलवाङ्मय-तत्त्वबोधा, दुद्भूत—बुद्धि—पटुभिः सुरलोक—नाथैः ।
स्तोत्रैर्जगत्त्रितय— चित—हरै— रुदारैः, स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥२॥
बुद्ध्या विनापि विबुधार्चित—पाद-पीठ, स्तोतुं समुद्यत—मतिर्विगत—त्रपोऽहम् ।
बालं विहाय जल-संस्थित-मिन्दु-बिम्ब, मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥३॥
वक्तुं गुणान् गुण-समुद्र शशांक-कान्तान्, कस्ते क्षमः सुर-गुरुप्रतिमोऽपि बुद्ध्या ।
कल्पान्त- काल- पवनोद्धत- नक्र-चक्रं, को वा तरीतु-मलसम्बुनिधिं भुजाभ्याम् ॥४॥
सोऽहं तथापि तव भक्ति-वशान्मुनीश, कर्तुं स्तवं विगत शक्ति—रपि प्रवृतः ।
प्रीत्यात्म-वीर्य मविचार्य्य मृगोमृगेन्द्रं, नाऽभ्येति किं निजशिशोः परिपालनार्थम् ॥५॥

अल्पश्रुतं श्रुतवतां परिहास-धाम, त्वद्भक्ति-रेव मुखरी कुरुते बलान्माम्।
यत्कोकिलः किल मधौ मधुरं विरौति, तच्चाम्र चारु-कलिका निकरैक--हेतु ॥६॥
त्वत्संस्तवेन भव-सन्तति सन्निबद्धं, पापं क्षणात्क्षय- मुपैति शरीर-भाजाम्।
आक्रान्त-लोक-मलिनील --मशेष माशु, सूर्यांशु-भिन्न--मिव शार्वर-मन्धकारम् ॥७॥
मत्वेति नाथ तव संस्तवनं मयेद, मारभ्यते तनुधियाऽपि तव प्रभावात्।
चेतो हरिष्यति सतां नलिनी-दलेषु, मुक्ताफल-द्युति- मुपैति ननूद-बिन्दुः ॥८॥
आस्तां तव स्तवन-मस्त-समस्त दोषं, त्वत्संकथापि जगतांदुरितानि हन्ति।
दूरे सहस्र- किरणः कुरुते प्रभैव, पद्माकरेषु जलजानि विकास-भाञ्जि ॥९॥
नात्यद्भुतं भुवनं-भूषण-भूतनाथ, भूतैर्गुणर्भुवि भवन्त मभिष्टु-वन्त।
तुल्या भवन्ति भवतो ननु तेन किंवा, भूत्याश्रितं य इह नात्मसमं करोति ॥१०॥
दृष्टवा भवन्त --मनिमेष-विलोकनीयं, नान्यत्र तोष-मपुयाति जनस्य चक्षुः।
पीत्वा पयः शशिकर-द्युतिदुग्ध-सिन्धोः, क्षारं जलं जलनिधे रसितुं क इच्छेत् ॥११॥
यैः शान्तराग-रुचिभिः परमाणु-भिस्त्वं, निर्मापितस्त्रिभुवनैक ललाम--भूत।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां, यत्ते समान-मपरं न हि रूपमस्ति ॥१२॥
वक्त्रं क्व ते सुर-नरोरगनेत्र-हारि, निःशेष-निर्जित- जगत्त्रितयोपमानम्।
बिम्बं कलंक-मलिनं क्व निशाकरस्य, यद्वासरे भवति पाण्डु-पलाश-कल्पम् ॥१३॥
सम्पूर्ण मण्डल-शशांक-कला कलाप, शुभ्रा गुणास्त्रिभुवनं तव लङ्घयन्ति।
ये संश्रितास्त्रिजगदीश्वर- नाथमेकं, कस्तान्निवारयति संचरतो यथेष्टम् ॥१४॥
चित्रं किमत्र यदि ते त्रिदशांगनाभि, र्नीतं मनागपि मनो न विकार-मार्गम्।
कल्पान्त-काल-मरुता चलिता चलेन, किं मन्दराद्रि-शिखरं चलितं कदाचित् ॥१५॥
निर्धूम — र्वर्त्ति — रपवर्जित-तैलपूरः, कृत्स्नं जगत्त्रयमिदं प्रकटी-करोषि।
गम्यो न जातु मरुतां चलिता-चलानां, दीपोऽपरस्त्वमसि नाथ जगत्प्रकाशः ॥१६॥
नास्तं कदाचिदुपयासि न राहु-गम्यः, स्पष्टी -करोषि सहसा युगपज्जगन्ति।
नाम्भोधरोदरनिरुद्ध-महा- प्रभावः, सूर्यातिशायि-महिमासि मुनीन्द्र लोके ॥१७॥
नित्योदयं दलित-मोह-महान्धकारं, गम्यं न राहु वदनस्य न वारिदानाम्।
विभ्राजतेतवमुखाब्जमनल्प-कान्ति, विद्योतयज्-जगदपूर्व-शशांक बिम्बम् ॥१८॥

किं शर्वरीषु शशिनाह्नि विवस्व तावा, युष्मन्मुखेन्दु दलितेषु तमःसु नाथ।
निष्पन्न शालि वन शालिनि जीव लोके, कार्यं कियज्जलधरैर्जल भारनम्रैः ॥१६॥
ज्ञानं यथा त्वयि विभूति कृतावकाशं, नैवं तथा हरि हरादिषु नायकेषु।
तेजो महामणिषु याति यथा महत्त्वं, नैवं तु काच शकले किरणा कुलेऽपि ॥२०॥
मन्ये वरं हरि हरादय एव दृष्टा, दृष्टेषु येषु हृदयं त्वयि तोषमेति।
किं वीक्षितेन भवता भुवि येन नान्यः, कश्चिन्मनो हरति नाथ भवान्तरेऽपि ॥२१॥
स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्, नान्या सुतं त्वदुपमं जननी प्रसूता।
सर्वा दिशो दधति भानि सहस्र रश्मिं, प्राच्येव दिग्जनयति स्फुर दंशु जालम् ॥२२॥
त्वामा मनन्ति मुनयः परमं पुमांस, मादित्य वर्णं ममलं तमसः पुरस्तात्।
त्वामेव सम्य गुपलभ्य जयन्ति मृत्युं, नान्यःशिवःशिव पदस्य मुनीन्द्र पन्थाः ॥२३॥
त्वा मव्ययं विभु तचिन्त्य मसंख्य माद्यं, ब्रह्माण मीश्वर मनन्त मनंग केतुम्।
योगीश्वरं विदित योग मनेक मेकं, ज्ञान स्वरूप ममलं प्रवदन्ति सन्तः ॥२४॥
बुद्धस्त्वमेव विबुधार्चित बुद्धि बोधा, त्वं शंकरोऽसि भुवन त्रय शंकरत्वात्।
धातासि धीर शिव मार्ग विधेर्विधानात्, व्यक्तं त्वमेव भगवन् पुरुषोत्तमोऽसि ॥२५॥

तुभ्यं नम स्त्रिभुवनार्ति हराय नाथ, तुभ्यं नमः क्षितितलामल भूषणाय।
तुभ्यं नमस्त्रिजगतः परमेश्वराय, तुभ्यं नमो जिन भवोदधि शोषणाय ॥२६॥

को विस्मयोऽत्र यदि नाम गुणैरशेषै, स्त्वं संश्रितो निरवकाश तया मुनीश।
दोषै रुपात्त विविधाश्रयजात गर्वैः, स्वप्नान्तरेऽपि न कदाचिद पीक्षि तोसि ॥२७॥
उच्चैर शोक तरु संश्रित मुन्मयूख, माभाति रूप ममलं भवतो नितान्तम्।
स्पष्टोल्लसत् किरणमस्त तमोवितानं, विम्बं रवेरिव पयोधर पार्श्ववर्ति ॥२८॥
सिंहासने मणि मयूख शिखा विचित्रे, विभ्राजते तव वपुः कनकावदातम्।
विम्बं वियद्विल सदंशु लता वितानं, तुंगोदयाद्रि सिरसीव सहस्र रश्मे ॥२६॥
कुन्दावदात चल चामर चारु शोभं, विभ्राजते तव वपुः कलधौत कान्तम्।
उद्यच्छशांक शुचि निर्झर वारि धार, मुच्चैस्तटं सुर गिरेरिव शात कौम्भम् ॥३०॥
छत्र त्रयं तव विभाति शशांक कान्त, मुच्चैःस्थितं स्थगित भानु कर प्रतापम्।
मुक्ता फल प्रकर जाल विवृद्ध शोभं, प्रख्यापयतः त्रिजगत परमेश्वरत्वम् ॥३१॥

गम्भीर तार रव पूरित दिग्विभाग, स्त्रैलोक्य लोक शुभ संगम भूति दक्षः।
सद्धर्म राज जय घोषण घोषकः सन्, खे दुन्दुभिर ध्वनति ते यशसः प्रवादी ॥३२॥

मन्दार सुन्दर नमेरु सुपारिजात, सन्तानकादि कुसमोत्कर वृष्टिरुद्धा।
गन्धोद बिन्दु शुभ मन्द मरुत्प्रयाता, दिव्या दिवः पतति ते वयसां ततिर्वा ॥३३॥

शुम्भत्प्रभा वलय भूरि विभा विभोस्ते, लोकत्रये द्युतिमतां द्युतिमाक्षिपन्ती।
प्रोद्यद्दिवाकर निरन्तर भूरि संख्या, दीप्त्याजयत्यपिनिशामपि सोमसौम्याम् ॥३४॥

स्वर्गा पवर्ग गममार्ग विमार्गणेष्टः, सद्धर्म तत्त्व कथनैक पटुस् त्रिलोक्याः।
दिव्य ध्वनिर् भवति ते विशदार्थ सर्व, भाषा स्वभाव परिणाम गुणैः प्रयोज्यः ॥३५॥

उन्निद्र हेम नवपंकज पुञ्ज कान्ती, पर्युल्लसन्नख मयूख शिखा भिरामौ।
पादौ पदानि तव यत्र जिनेन्द्र ! धत्तः, पद्मानि तत्र विबुधा परिकल्पयन्ति ॥३६॥

इत्थं यथा तव विभूतिर भूज्जिनेन्द्र!, धर्मोपदेशन विधौ न तथा परस्य।
यादृक् प्रभा दिनकृतः प्रहतान्धकारा, तादृक्कुतो ग्रह गणस्य विकासिनोऽपि ॥३७॥

श्च्योतन् मदाविलविलोल कपोलमूल, मत्त भ्रमद् भ्रमर नाद विवृद्ध कोपम्।
ऐरावता भमिभ मुद्धत मापतन्तं, दृष्ट्वा भयंभवित नोभवदाश्रितानाम् ॥३८॥

भिन्नेभ कुम्भगल दुज्ज्वल शोणिताक्त, मुक्ताफल प्रकर भूषित भूमिभागः।
बद्ध क्रमः क्रम गतं हरिणाधिपोऽपि, नाक्रामति क्रमयुगाचल संश्रितं ते ॥३९॥

कल्पान्त काल पवनोद्धत वह्नि कल्पं, दावानलं ज्वलित मुज्ज्वलमुत्स्फुलिंगम्।
विश्वं जिघत्सुमिव सम्मुख मापतन्तं, त्वन्नाम कीर्त्तन जलं शमयत्य शेषम् ॥४०॥

रक्तेक्षणं समद कोकिल कण्ठ नीलं, क्रोधोद्धतं फणिन मुत्फण मापतन्तम्।
आक्रामति क्रमयुगेण निरस्त शंकस्, त्वन्नाम नाग दमनी हृदि यस्य पुंसः ॥४१॥

वल्गत्तुरंग गज गर्जित भीम नाद, माजौ बलं बलवतामपि भूपतीनाम्।
उद्यद् दिवाकर मयूख शिखा पविद्धं, त्वत्कीर्त्तनात्तम इवाशु भिदामुपैति ॥४२॥

कुन्ताग्र भिन्न गज शोणित वारिवाह, वेगावतार तरणातुर योध भीमे।
युद्धे जयं विजित दुर्जय जेय पक्षास्, त्वत्पाद पंकज वना श्रयिणो लभन्ते ॥४३॥

अम्भो निधौ क्षुभित भीषण नक्र चक्र, पाठीन पीठ भय दोल्बण वाडवाग्नौ।
रंगतरंग शिखर स्थित यान पात्रास्, त्रासं विहाय भवतः स्मरणाद् व्रजन्ति ॥४४॥

उद्भूत भीषण जलोदर भार भुग्नाः, शोच्यां दशा मुपगताश् च्युत जीविताशाः।
त्वत्पाद पंकज रजोमृतदिग्ध देहा, मर्त्या भवन्ति मकरध्वज तुल्य रूपाः ॥४५॥
आपाद कण्ठ मुरुशृंखल वेष्टितांगा, गाढं बृहन्निगड कोटि निघृष्ट जंघाः।
त्वन्नाम मन्त्र मनिशं मनुजाः स्मरंतः, सद्यः स्वयं विगत बन्ध भया भवन्ति ॥४६॥
मत्त-द्विपेन्द्र मृगराज दवानलाहि, संग्राम वारिधि महोदर बंधनोत्थम्।
तस्याशु नाश मुपयाति भयं भियेव, यस्तावकं स्तव-मिमं मतिमान-धीते ॥४७॥
स्तोत्र स्रजं तव जिनेन्द्र गुणैर् निबद्धां, भक्त्या मया विविध वर्ण विचित्र-पुष्पाम्।
धत्ते जनो य इह कण्ठ गतामजस्रं, तं मानतुंगमवशा समुपैति लक्ष्मीः ॥४८॥

॥ इति श्री मानतुंगाचार्य विरचित भक्तामर स्तोत्रम् ॥

—०—

श्री सिद्धसेन दिवाकर प्रणीतं

# कल्याण मंदिर स्तोत्रम्

कल्याणमंदिर मुदारम वद्य भेदि, भीता भय प्रदमनिंदितमंघ्रि पद्मं।
संसारसागर निमिज्ज दशेष जंतु, पोतायमानमभिनम्य जिनेश्वरस्य ॥१॥

यस्य स्वयं सुरगुरुर्गरिमांबुराशेः, स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम्।
तीर्थेश्वरस्य कमठस्मयधूमकेतो, स्तस्याहमेष किल संस्तवनं करिष्ये ॥२॥

सामान्यतोऽपि तव वर्णयितुं स्वरूपम्, स्मादृशाः कथमधीश भवन्त्यधीशाः।
धृष्टोऽपिकौशिक शिशुर्यदि वा दिवांधो, रूपं प्ररूपयति किं किल घर्मरश्मेः ॥३॥

मोहक्षयादनुभवन्नपि नाथ मर्त्यो, नूनं गुणान्गणयितुं न तव क्षमेत।
कल्पांतवान्तपयसः प्रगटोऽपि यस्मान्, मीयेत केन जलधेर्ननुरत्नराशिः ॥४॥

अभ्युद्यतोऽस्मि तव नाथ जडाशयोऽपि, कर्तुं स्तवं लसदसंख्यगुणाकरस्य।
बालोपि किं न निजबाहुयुगं वितत्य, विस्तीर्णतां कथयति स्वधियाम्बुराशेः। ५॥

ये योगिनामपि न यान्ति गुणास्तवेश, वक्तुं कथं भवति तेषु ममावकाशः।
जाता तदेव मसमीक्षित कारितेयं, जल्पन्ति वा निजगिरा ननुपक्षिणोऽपि ॥६॥
आस्तामचिन्त्य महिमा जिन संस्तवस्ते, नामापि पाति भवतो भवतो जगन्ति।
तीव्रात पोपहत पान्थ जनान्निदाघे, प्रीणाति पद्म सरसः सरसोऽनिलोऽपि ॥७॥
हृद्वर्तिनि त्वयि विभो शिथिली भवन्ति, जन्तोः क्षणेन निबिडा अपि कर्मबन्धाः।
सद्यो भुजंग ममया इव मध्य भाग, मभ्यागते वनशिखण्डिनि चन्दनस्य ॥८॥
मुच्यन्त एव मनुजाः सहसा जिनेन्द्र, रौद्रै रुपद्रव शतैस्त्वयि वीक्षितेऽपि।
गोस्वामिनि स्फुरित तेजसि दृष्टमात्रे, चौरैरिवाशु पशवः प्रपलाय मानैः ॥९॥
त्वं तारको जिन कथं भविनांत एव, त्वामुद्व हन्ति हृदयेन यदुत्तरन्तः।
यद्वा दृतिस्तरति यज्जलमेष नून, मन्तर्गतस्य मरुतः स किलानुभावः ॥१०॥
यस्मिन्हर प्रभृतयोऽपि हतप्रभावाः, सोऽपि त्वयारति पतिः क्षपितः क्षणेन।
विध्यापिता हुतभुजः पयसाथयेन, पीतं न किं तदपि दुर्धर वाडवेन ॥११॥
स्वामिन्ननल्पगरि माणमपि प्रपन्ना, स्त्वां जन्तवः कथमहो हृदये दधानाः।
जन्मोदधिं लघु तरन्त्यति लाघवेन, चिन्त्यो न हन्तमहतां यदि वा प्रभावः ॥१२॥
क्रोधस्त्वया यदि विभो प्रथमं निरस्तो, ध्वस्तस्तदा वदकथं किलकर्म चौराः।
प्लोषत्यमुत्र यदिवा शिशिरापिलोके, नीलद्रुमाणि विपिनानिन किं हिमानी ॥१३॥
त्वां योगिनो जिन सदा परमात्मरूप, मन्वेषयन्ति हृदयाम्बुज कोषदेशे।
पूतस्य निर्मल रुचेर्यदि वाकिमन्य, दक्षस्य सम्भव पदं ननु कर्णिकायाः ॥१४॥
ध्यानाज्जिनेश भवतो भविनः क्षणेन, देहं विवाह परमात्मदशां व्रजन्ति।
तीव्रानलादुपलभाव मपास्य लोके, चामीकरत्वम चिरादिव धातुभेदाः ॥१५॥
अन्तः सदैव जिन यस्य विभाव्यसे त्वं, भव्यैः कथं तदपि नाशयसे शरीरम्।
एतत्स्वरूपमथ मध्य विवर्तिनो हि, यद्विग्रहं प्रशमयन्ति महानुभावाः ॥१६॥
आत्मा मनीषि भिरयं त्वद भेद बुध्या, ध्यातो जिनेन्द्र भवतीह भवत्प्रभावः।
पानीय मप्य मृत मित्यनु चिन्त्यमानं, किं नाम नो विषविकारमपाकरोति ॥१७॥
त्वामेव वीततमसं परवादिनोऽपि, नूनं विभोहरिहरादिधिया प्रपन्नाः।
किं काचकामलि भिरीश सितोऽपिशंखो, नो गृह्यते विविधवर्ण विपर्ययेण ॥१८॥

धर्मोपदेश समये सविधानुभावा, दास्तां जनो भवति ते तरुरप्यशोकः ।
अभ्युद्गते दिनपतौ समहीरुहोऽपि, किं वा विबोधमुपयाति न जीवलोकः ॥१६॥
चित्रं विभो कथमवाङ्मुखवृन्तमेव, विष्वक्प तत्यविरला सुरपुष्पवृष्टिः ।
त्वद्गोचरे सुमनसां यदि वा मुनीश! गच्छन्ति नूनमध एव हि बन्धनानि ॥२०॥
स्थाने गभीरहृदयोदधिसम्भवायाः, पीयूषतां तव गिरः समुदीरयन्ति ।
पीत्वा यतः परमसंमदसंगभाजो, भव्या व्रजन्ति तरसाप्य जरामरत्वम् ॥२१॥
स्वामिन्सुदूरमवनम्य समुत्पतन्तो, मन्ये वदन्ति शुचयः सुरचामरौघाः ।
येऽस्मै नतिं विदधते मुनिपुंगवाय, ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥२२॥
श्यामं गभीरगिरिमुज्ज्वलहेमरत्न, सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम् ।
आलोकयंति रभसेन नदंतमुच्चै, श्चामीकराद्रि शिरसीव नवाम्बुवाहम् ॥२३॥
उद्गच्छता तवशितिद्युतिमण्डलेन, लुप्तच्छ दच्छविरशोक तरुर्बभूव ।
सांनिध्यतोऽपि यदिवातव वीतराग! नीरागतां व्रजति को न सचेतनोऽपि ॥२४॥

भो भोः प्रमादमवधूय भजध्वमेन, मागत्य निर्वृतपुरीं प्रति सार्थवाहम् ।
एतन्निवेदयति देव जगत्त्रयाय, मन्ये न दन्नभिनभः सुरदुन्दुभिस्ते ॥२५॥

उद्द्योतितेषु भवता भुवनेषु नाथ, तारान्वितो विधुरयं विहताधिकारः ।
मुक्ताकलाप कलितोरुसितातपत्र, व्याजात्त्रिधा धृत तनुर्ध्रुवमभ्युपेतः ॥२६॥
स्वेन प्रपूरित जगत्त्रय पिण्डितेन, कान्ति प्रताप यशसामिव सञ्चयेन ।
माणिक्य हेम रजतप्रविनिर्मितेन, सालत्रयेण भगवन्नभितो विभासि ॥२७॥
दिव्यस्रजो जिन नमत्त्रिदशाधिपाना, मुत्सृज्य रत्नरचितानपि मौलिबंधान् ।
पादौ श्रयंति भवतायदि वापरत्र, त्वत्संगमे सुमनसो नरमंतएव ॥२८॥
त्वं नाथ जन्मजलधेर्विपराङ्मुखोऽपि, यत्तारयस्यसुमतो निज पृष्टलग्नान् ।
युक्तं हि पार्थिवनिपस्य सतस्तवैव, चित्रं विभो यदसि कर्मविपाकशून्यः ॥२९॥
विश्वेश्वरोऽपि जनपालक दुर्गतस्त्वं, किं वाक्षर प्रकृतिरप्यलिपिस्त्वमीश ।
अज्ञानवत्यपि सदैव कथंचिदेव, ज्ञानंत्वयि स्फुरति विश्व विकास हेतु ॥३०॥
प्राग्भारसम्भृतनभांसिर जांसि रोषा, दुत्थापितानि कमठेन शठेन यानि ।
छायापितैस्तव न नाथ हता हताशो, ग्रस्तस्त्वमी भिरयमेव परं दुरात्मा ॥३१॥

यद्गर्जदूर्जितघनौघ मदभ्र भीम, भ्रश्यत्तडिन्मुसल मांसलघोर धारम्।
दैत्येन मुक्तमथ दुस्तरवारि दध्रे, तेनैव तस्य जिन दुस्तरवारिकृत्यम् ॥३२॥

ध्वस्तोर्ध्वकेशविकृता कृतिमर्त्यमुंड, प्रालंबभृद्भयदवक्त्रविनिर्यदग्निः।
प्रेतव्रजः प्रति भवंतमपीरितो यः, सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥३३॥

धन्यास्त एव भुवनाधिप ये त्रिसंध्य, माराधयंति विधिवद्विधुतान्यकृत्वा।
भक्त्योल्लसत्पुलकपक्ष्मलदेह देशाः, पादद्वयं तव विभो भुवि जन्म भाजः ॥३४॥

अस्मिन्नपारभववारिनिधौ मुनीश, मन्ये न मे श्रवणगोचरतां गतोऽसि।
आकर्णिते तु तव गोत्रपवित्रमंत्रे, किं वा विपद्विषधरी सविधं समेति ॥३५॥

जन्मांतरेऽपि तव पादयुगं न देव, मन्येमया महितमीहितदानदक्षं।
तेनेह जन्मनि मुनीश! पराभवानां, जातो निकेतनमहं मथिताशयानाम् ॥३६॥

नूनं न मोहतिमिरावृतलोचनेन, पूर्वं विभो सकृदपि प्रविलोकितोऽसि।
मर्माविधो विधुरयंति हि मामनर्थाः, प्रोद्यत्प्रबंधगतयः कथमन्यथैते ॥३७॥

आकर्णितोपिमहितोपि निरीक्षितोपि, नूनं न चेतसि मया विधृतोऽसि भक्त्या।
जातोऽस्मि तेन जनबांधव दुःखपात्रं, यस्मात्क्रियाःप्रतिफलंति न भावशून्या ॥३८॥

त्वं नाथ दुःखिजनवत्सल हे शरण्य, कारुण्य पुण्य वसते वशिनां वरेण्य।
भक्त्यानते मयिमहेश दयांविधाय, दुःखांकुरोद्दलन तत्परतां विधेहि ॥३९॥

निसंख्यसारशरणं शरणं शरण्य, मासाद्य सादित रिपुप्रथितावदानं।
त्वत्पादपंकजमपि प्रणिधान वंध्यो, वंध्योस्मि तद्भुवनपावन हा हतोस्मि ॥४०॥

देवेंद्र वंद्य विदिताखिल वस्तुसार, संसारतारक विभो भुवनाधिनाथ।
त्रायस्व देव करुणाह्रद मां पुनीहि, सीदन्तमद्य भयदव्यसनांबुराशेः ॥४१॥

यद्यस्ति नाथ भवदंघ्रिसरोरुहाणां, भक्तेः फलं किमपि संततसंचितायाः।
तन्मे त्वदेकशरणस्य शरण्य भूयाः, स्वामी त्वमेव भुवनेत्र भवांतरेपि ॥४२॥

इत्थं समाहितधियो विधिवज्जिनेंद्र, सांद्रोल्लसत्पुलककंचुकितांग भागाः।
त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्ष्या, ये संस्तवं तव विभो रचयंति भव्याः ॥४३॥

जन नयन कुमुद चंद्र प्रभास्वराः, स्वर्गसंपदो भुक्त्वा।
ते विगलितमलनिचया अचिरान्मोक्षं प्रपद्यंते ॥४४॥

इति कल्याण मंदिर स्तोत्रम्

श्री वादिराज प्रणीतं

# ❀ एकीभाव स्तोत्रम् ❀

एकीभावं गत इवमया यः स्वयं कर्मबन्धो, घोरं दुःख भवभवगतो दुर्निवारःकरोति।
तस्याप्यस्य त्वयिजिनवरे भक्तिरुन्मुक्तये चे,ज्जेतुं शक्यो भवति न तयाकोऽपरस्तापहेतुः ।१।
ज्योतीरूपं दुरितनिवह ध्वान्तविध्वंसहेतुं, त्वामेवाहुर्जिनवर चिरं तत्त्वविद्याभियुक्ताः।
चेतोवासे भवसि च मम स्फारमुद्भासमान, स्तस्मिन्नंहः कथमिवतमोवस्तुतो वस्तुमोष्टे ।२।
आनन्दाश्रुस्न पित वदनं गद्गदं चाभिजल्पन्,यश्चायेत त्वयिदृढमनाःस्तोत्रमन्त्रैर्भवन्तम्।
तस्याभ्यस्तादपि च सुचिरंदेहवल्मीकमध्या,न्निष्कास्यंते विविधविषमव्याधयःकाद्रवेयाः ।३।
प्रागेवेह त्रिदिवभवनादेष्यता भव्यपुण्यात्, पृथ्वीचक्रं कनकमयतां देव निन्ये त्वयेदम्।
ध्यानद्वारं मम रुचिकरं स्वान्तगेहं प्रविष्ट, स्तत्किं चित्रं जिनवपुरिदं यत्सुवर्णीकरोषि ।४।
लोकस्यैकस्त्वमसि भगवन्निर्निमित्तेन, बन्धुस्त्वय्येवासौ सकलविषया शक्तिरप्रत्यनीका।
भक्तिस्फीतांचिरमधिवसन्मामिकांचित्तशय्यां,मय्युत्पन्नं कथमिव ततः क्लेशयूथंसहेथाः ।५।
जन्माटव्यां कथमपिमया देव दीर्घं भ्रमित्वा,प्राप्तैवेयं तव नय कथा स्फारपीयूषवापी।
तस्या मध्ये हिमकर हिमव्यूहशीते नितान्तं निर्मग्नं मां न जहित कथं दुःखदावोपतापाः ।६।
पादन्यासादपि च पुनतो यात्रया ते त्रिलोकीं,हेमाभासो भवतिसुरभिःश्रीनिवासश्च पद्मः।
सर्वांगेण स्पृशति भगवंस्त्वय्यशेषं मनो मे, श्रेयः किं तत्स्वयमहरहर्यन्न मामभ्युपैति ।७।
पश्यन्तं त्वद्वचनममृतं भक्तिपात्र्या पिबन्तं, कर्मारण्यात्पुरुषमसमानन्दधाम प्रविष्टम्।
त्वां दुर्वारस्मरमदहरं त्वत्प्रसादैकभूमिं, क्रूराकाराः कथमिव रुजाकण्टका निलुंठन्ति ।८।
पाषाणात्मा तदितरसमः केवलं रत्नमूर्ति, र्मानस्तम्भो भवति च परस्तादृशो रत्नवर्गः।
दृष्टिप्राप्तो हरति स कथं मानरोगंनराणां, प्रत्यासत्तिर्यदि न भवतस्तस्य तच्छक्तिहेतुः ।९।
हृद्यःप्राप्तो मरुदपि भवन्मूर्ति शैलोपवाही, सद्यः पुंसां निरवधिरुजाधूलिबन्धं धुनोति।
ध्यानाहूतो हृदयकमलं यस्य तुत्वं प्रविष्ट, स्तस्याशक्यः क इह भुवने देवलोकोपकारः ।१०।
जानासि त्वं मम भवभवेयच्चयादृक्च दुखंजातं यस्यस्मरणमपि मे शस्त्रवन्निष्पिनष्टि।
त्वं सर्वेशःसकृपइति च त्वामुपेतोऽस्मि भक्तया, यत्कर्तव्यंतदिहविषये देव एवप्रमाणम् ।११।
प्रापद्दैवं तव नुतिपदैर्जीवकेनोपदिष्टैः, पापाचारीमरणसमये सारमेयोऽपि सौख्यम्।
कः संदेहोयदुपलभते वासव श्रीप्रभुत्वं,जलपञ्जाप्यैर्मणिभिरमलैस्त्वन्नमस्कार चक्रम् ।१२।
शुद्धे ज्ञानेशुचिनिचरितेसत्यपित्वय्यनीचा,भक्तिर्नोचेदन वधिसुखावञ्चिकाकुञ्चिकेयम्।
शक्योद्घाटंभवति हि कथं मुक्तिकामस्य पुंसो, मुक्तिद्वारं परिदृढ़महामोहमुद्राकवाटम् ।१३।

प्रच्छन्नः खल्वयमघमयैरंधकारैः समंता, त्पंथा मुक्तेः स्थपुटितपदः क्लेशगर्तैरगाधैः।
तत्कस्तेन व्रजति सुखतो देव तत्त्वावभासी, यद्यग्रेऽग्रे न भवति भवद्भारतीरत्नदीपः।१४।
आत्मज्योति र्निधिरनवधिर्द्रष्टुरानंद हेतुः, कर्मक्षोणीपटलपिहितो योऽनवाप्यः परेषां।
हस्ते कुर्वन्त्यनतिचिरतस्तं भवद्भक्तिभाजः, स्तोत्रैर्बंध प्रकृतिपुरुषोद्दामधात्री खनित्रैः।१५।
प्रत्युत्पन्नानयहिमगिरेरायताचामृताब्धेर्या, देव त्वत्पदकमलयोः संगता भक्तिगंगा।
चेतस्तस्यां मम रुचिवशादाप्लुतं क्षालितांहः, कल्माषं यद्भवति किमियं देव संदेहभूमिः।१६।
प्रादुर्भूतस्थिरपदसुखं त्वामनुध्यायतो मे, त्वय्येवाहं स इति मतिरुत्पद्यते निर्विकल्पा।
मिथ्यैवेयं तदपि तनुते तृप्तिमभ्रेषरूपां, दोषात्मानोप्यभिमतफलास्त्वत्प्रसादाद्भवंति।१७।
मिथ्यावादं मलमपनुदन्सप्तभंगीतरंगै, र्वागंभोधिर्भुवनमखिलं देव पर्येति यस्ते।
तस्यावृत्तिं सपदि विबुधाश्चेतसैवाचलेन, व्यातन्वंतः सुचिरममृतसेवया तृप्नुवंति।१८।
आहार्येभ्यः स्पृहयति परं यःस्वभावादहृद्यः,शस्त्रग्राही भवति सततं वैरिणायश्च शक्यः।
सर्वांगेषु त्वमसि सुभगस्त्वं न शक्यः परेषां,तत्किं भूषावसनकुसुमैः किं च शस्त्रैरुदस्त्रै।१९।
इन्द्रः सेवांतव सुकुरुतां किं तया श्लाघनं ते,तस्यैवेयंभवलयकरी श्लाघ्यतामातनोति।
त्वंनिस्तारीजननजलधेःसिद्धिकांतापतिस्त्वं, त्वंलोकानांप्रभुरितितवश्लाघ्यतेस्तोत्रमित्थं।२०।
वृत्तिर्वाचामपरसदृशी न त्वमन्येन तुल्य, स्तुत्यद्गाराः कथमिव ततस्त्वय्यमीनःक्रमंते।
मैवं भूवंस्तदपि भगवन्भक्तिपीयूषपुष्टा, स्ते भव्यानामभिमतफलाःपारिजाता भवंति।२१।
कोपावेशो न तव न तव क्वापि देव प्रसादो, व्याप्तंचेतस्तव हि परमोपेक्षयैवानपेक्षं।
आज्ञावश्यं तदपि भुवनं सन्निधिर्वैरहारी, क्वैवंभूतं भुवनतिलक ! प्राभवं त्वत्परेषु।२२।
देव स्तोतुं त्रिदिवगणिकामंडलीगीतकीर्तिं,तोतूर्ति त्वां सकलविषयज्ञानमूर्तिं जनोयः।
तस्यः क्षेमं न पदमटतो जातु जोहूर्ति पंथा,स्तत्त्वग्रंथस्मरणविषये नैष मोमूर्ति मर्त्यः।२३।
चित्ते कुर्वन्निरवधिसुखज्ञानदृग्वीर्यरूपं, देव त्वां यः समयनियमादादरेण स्तवीति।
श्रेयोमार्गं सखलुसुकृतीतावता, पूरयित्वा कल्याणानांभवति विषयःपंचधा पंचितानां।२४।
भक्तिप्रह्वमहेंद्रपूजितपदत्वत्कीर्तने न क्षमाःसूक्ष्मज्ञानदृशोऽपिसंयमभृतःके हन्तमंदा वयं।
अस्माभिः स्तवनच्छलेन तु परस्त्वय्यादरस्तन्यते, स्वात्माधीनसुखैषिणां स खलु नः
कल्याणकल्पद्रुमः।२५।

वादिराज मनु शाब्दिकलोको वादिराजमनु तार्किकसिंहः।
वादिराजमनु काव्यकृतस्ते वादिराजमनु भव्य सहायः।२६।

—इति श्री वादिराज कृतमेकीभाव स्तोत्रम्—

ॐ श्री धनंजय कवि प्रणीतं । ह्रीं

# विषापहार स्तोत्रं

स्वात्मस्थितः सर्वगतः समस्त, व्यापारवेदी विनिवृत्तसंगः ।
प्रवृद्धकालोप्यजरो वरेण्यः, पायादपायात्पुरुषः पुराणः ॥ १ ॥
परैरचिंत्यं युगभारमेकः, स्तोतुं वहन्योगिभिरप्यशक्यः ।
स्तुत्योऽद्यमेऽसौऽवृषभो नभानोः, किमप्रवेशे विशति प्रदीपः ॥ २ ॥
तत्याज शक्रः शकनाभिमानं, नाहं त्यजामि स्तवनानुबंधं ।
स्वल्पेन बोधेन ततोधिकार्थं, वातायनेनेव निरूपयामि ॥ ३ ॥
त्वं विश्वदृश्वा सकलैरदृश्यो, विद्वानशेषं निखिलैरवेद्यः ।
वक्तुं कियान्कीदृशमित्यशक्यः, स्तुतिस्ततो ऽशक्तिकथा तवास्तु ॥ ४ ॥
व्यापीडितं बाल मिवात्मदोषै, रुल्लाघतां लोकमवापि पस्त्वं ।
हिताहितान्वेषण मांद्य भाज्यः, सर्वस्य जंतोरसि बालवैद्यः ॥ ५ ॥
दाता न हर्ता दिवसं विवस्वा, नद्यश्व इत्य च्युत दर्शिताशः ।
सव्याजमेवं गमयत्य शक्तः, क्षणेन दत्सेऽभिमतंनताय ॥ ६ ॥
उपैति भक्त्या सुमुखः सुखानि, त्वयि स्वभावाद्विमुखश्च दुःखं ।
सदावदात द्युतिरेक रूप, स्तयोस्त्वमादर्श इवाऽऽवभासि ॥ ७ ॥
अगाद्यताऽब्धेः सयतः पयोधि, मे रोश्च तुंगाप्रकृतिः स यत्र ।
द्यावा पृथिव्यो प्रथुता तथैव, व्यापत्वदीया भुवनांतराणि ॥ ८ ॥
तवानवस्था परमार्थतत्त्वं, त्वया न गीतः पुनरागमश्च ।
दृष्टं विहाय त्वमदृष्टमैषी, विरुद्धवृत्तोऽपि समंजसस्त्वं ॥ ९ ॥
स्मरःसुदग्धो भवतैव तस्मि, न्नुद्धूलितात्मा यदि नाम शंभु ।
अशेत वृन्दोपहतोपि विष्णुः, किं गृह्यते येन भवानजागः ॥१०॥
स नीरजा स्यादपरोऽघवान्वा, तद्दोषकीर्त्यैव न ते गुणित्वं ।
स्वतोंबुराशेर्महिमा न देव, स्तोकापवादेन जलाशयस्य ॥११॥
कर्मस्थितिं जंतुरनेकभूमिं, नयत्यमुं सा च परस्परस्य ।
त्वं नेतृभावं हि तयोर्भवाब्धौ, जिनेन्द्र नौनाविक योरिवाख्यः ॥१२॥
सुखाय दुःखानि गुणाय दोषा, न्धर्माय पापानि समाचरंति ।

तैलाय बालाः सिकतासमूहं, निपीडयन्ति स्फुटमत्वदीयाः ।।१३।।
विषापहारं मणिमौषधानि, मन्त्रं समुद्दिश्य रसायनं च ।
भ्राम्यन्त्यहो नत्वमितिस्मरन्ति, पर्यायनामानि तवैव तानि ।।१४।।
चित्ते न किञ्चित्कृतवानसि त्वं, देवः कृतश्चेतसि येन सर्वम् ।
हस्ते कृतं तेन जगद्विचित्रं, सुखेन जीवत्यपि चित्तवाह्यः ।।१५।।
त्रिकालतत्त्वं त्वमवैस्त्रिलोकी, स्वामीति संख्या नियतेरमीषाम् ।
बोधाधिपत्यं प्रति नाभविष्यं, स्तेऽन्येऽपि चेद् व्याप्स्यदमूनपीदम् ।।१६।।
नाकस्य पत्युः परिकर्म रम्यं, नागम्यरूपस्य तवोपकारि ।
तस्यैव हेतुः स्वसुखस्य भानो, रुद्बिभ्रतश्छत्र मिवादरेण ।।१७।।
क्वोपेक्षकस्त्वं क्व सुखोपदेशः, स चेत् किमिच्छा प्रतिकूलवादः ।
क्वासौ क्व वा सर्वजगत्प्रियत्वं, तन्नो यथा तथ्य मवेविजं ते ।।१८।।
तुंगात्फलं यत्तदकिञ्चनाच्च, प्राप्यं समृद्धान्न धनेश्वरादेः ।
निरम्भसोऽप्युच्चत मादिवाद्रे, र्नैकापि निर्याति धुनी पयोधेः ।।१९।।
त्रैलोक्य सेवा नियमाय दण्डं, दध्रे यदिन्द्रो विनयेन तस्य ।
तत्प्रातिहार्यं भवतः कुतस्त्यं, तत्कर्मयोगाद्यदि वा तवास्तु ।।२०।।
श्रिया परं पश्यति साधु निःस्वः, श्रीमान्न कश्चित्कृपणं त्वदन्यः ।
यथा प्रकाश स्थित मन्धकार, स्थायीक्षतेऽसौ न तथातमःस्थम् ।।२१।।
स्ववृद्धिनिः श्वास निमेषभाजि, प्रत्यक्ष मात्मानु भवेऽपि मूढः ।
किं चाखिलज्ञेय विवर्तिबोध, स्वरूप मध्य क्षमवैति लोकः ।।२२।।
तस्यात्म जस्तस्य पितेति देव, त्वां येऽवगायन्ति कुलं प्रकाश्य ।
तेऽद्यापि नन्वाश्मनमित्यवश्यं, पाणौ कृतं हेम पुनस्त्यजन्ति ।।२३।।
दत्तस्त्रिलोक्यां पटहोऽभिभूताः, सुरासुरास्तस्य महान्स लाभः ।
मोहस्य मोहस्त्वयि को विरोद्धु, र्मूलस्य नाशो बलवद्विरोधः ।।२४।।
मार्गस्त्वयैको ददृशे विमुक्ते श्च, तुर्गतीनां गहनं परेण ।
सर्वं मया दृष्टमिति स्मयेन, त्वं मा कदाचिद् भुजमालुलोके ।।२५।।
स्वर्भानुरर्कस्य हविर्भुजोऽम्भः, कल्पान्त बातोम्बुनिधेर्विघातः ।
संसारभोगस्य वियोगभावो, विपक्ष पूर्वाभ्युदयास्त्वदन्ये ।।२६।।
अजानतस्त्वां नमतः फलंयत्त, ज्जानतोऽन्यं न तु देवतेति ।
हरिन्मणिं काचधिया दधानस्तं, तस्य बुद्धया वहतो न रिक्तः ।।२७।।

प्रशस्तवाचश्चतुराः कषायै, र्दग्धस्य देवव्यवहारमाहुः।
गतस्य दीपस्य हि नन्दितत्वं, दृष्टं कपालस्य च मंगलत्वम् ॥२८॥
नानार्थ मेकार्थ मदस्त्वदुक्तं, हितं वचस्ते निशमय्य वक्तुः।
निर्दोषतां के न विभावयन्ति, ज्वरेण मुक्तः सुगमः स्वरेण ॥२९॥
न क्वापि वाञ्छा ववृते चवाक्ते, कालेक्वचित्कोऽपि तथानियोगः।
नपूरयाम्यम्बुधि मित्युदंशुः, स्वयं हि शीतद्युतिरभ्युदेति ॥३०॥
गुणागभीराः परमः प्रसन्ना, वहु प्रकारा बहवस्तवेति।
दृष्टोऽयमन्तः स्तवने नतेषां, गुणो गुणानां किमतः परोऽस्ति ॥३१॥
स्तुत्या परं नाभिमतंहि भक्त्या, स्मृत्या प्रणत्या च ततो भजामि।
स्मरामि देवं प्रणमामि नित्यं, केनाप्युपायेन फलंहि साध्यम् ॥३२॥
ततस्त्रिलोकी नगराधि देवं, नित्यं परं ज्योतिरनन्त शक्तिम्।
अपुण्यपापं परपुण्यहेतुं, नमाम्यहं वन्द्यम वन्दितारम् ॥३३॥
अशब्दम स्पर्शम रूप गन्धं, त्वाँ नीरसं तद्विषयाव बोधम्।
सर्वस्य मातारममेय मन्यै, र्जिनेन्द्र मस्मार्य मनुस्मरामि ॥३४॥
अगाधमन्यै र्मनसाऽप्य लंघय, र्निष्किचनं प्रार्थित मर्थ वद्भिः।
विश्वस्य पारं तमदृष्ट पारं, पतिं जिनानां शरणं व्रजामि ॥३५॥
त्रैलोक्य दीक्षा गुरवे नमस्ते, यो वर्धमानोऽपि निजोन्नतोऽभूत।
प्राग्गण्ड शैलः पुनरद्रि कल्पः, पश्चान्नमेरुः कुलपर्वतोऽभूत् ॥३६॥
स्वयं प्रकाशस्य दिवानिशा वा, न बाध्यता यस्य न बाधकत्वम्।
नलाघवं गौरवमेक रूपं, वन्दे विभुं कालकलामतीतम् ॥३७॥
इति स्तुतिं देव विधाय दैन्या, द्वरं नयाचे त्वमुपेक्षकोऽसि।
छायातरुं संश्रयतः स्वतः, स्यात्कश्छायया याचितयात्मलाभः॥३८॥
अथास्ति दित्सा यदि वोपरोध, स्त्वय्येवसक्तांदिश भक्ति बुद्धिम्।
करिष्यते देव तथा कृपांमे, को वात्मपोष्ये सुमुखो न सूरिः ॥३९॥
वितरति विहिता यथाकथंचि, ज्जिनविनताय मनोषितानिभक्तिः।
त्वयि नुतिविषया पुनर्विशेषा, द्दिशतिसुखानि यशो धनंजयं च ॥४०॥

— इति श्रीधनजय कृत विषापहारस्तोत्रम् सम्पूर्णम् —

क्षेपक —

कैलासाद्रौ मुनींद्रः पुरुरपदुरितो मुक्तिमाप प्रणूतः।
चंपायां वासुपूज्यस्त्रिदशपतिनुतो नेमिरप्यूर्जयंते॥
पावायां वर्धमानस्त्रिभुवनगुरवो विंशतिस्तीर्थनाथाः।
सम्मेदाग्रे प्रजग्मुर्ददतु विनमतां निर्वृतिं नो जिनेंद्राः॥३३॥

चिन्ह चौबीस तीर्थंकर

गौर्गजोश्वः कपिः कोकः, सरोजः स्वस्तिकः शशी।
मकरः श्रीयुतो वृक्षो गंडो महिष सूकरो॥
सेधा वज्र मृगच्छागाः पाठीनः कलशस्तथा।
कच्छप श्चोत्पलं शंखो नागराजश्च केसरी॥३४॥

वंश चौबीस तीर्थंकर

शांति कुन्थ्वर कौरव्या यादवौ नेमि सुव्रतौ।
उग्रनाथौ पार्श्ववीरौ शेषा इक्ष्वाकु वंशजाः॥३५॥

कायोत्सर्ग आलोचना

इच्छामि भंते! परिणिव्वाणभत्ति काउस्सगो कओ तस्सालोचेउं। इमम्मि अवसप्पिणीये, चउत्थसमयस्स पच्छिमे भाए, आउठ्ठमासहीणे, वासचउक्कम्मि सेसकालम्मि। पावाये णयरीए कत्तियमासस्स किण्ह चउदसिए। रत्तीए सादीए णक्खत्ते, पच्चूसे, भयवदो महदि महावीरो वढ्ढमाणो सिद्धि गदो। तिसुविलोएसु, भवणवासिय वाणविंतरजोयिसिय कप्पवासियत्ति चउव्विहा देवा सपरिवारा दिव्वेण गंधेण, दिव्वेण पुप्फेण, दिव्वेण धूवेण, दिव्वेण चुण्णेण, दिव्वेण वासेण, दिव्वेण ण्हाणेण, णिच्चकालं, अच्चंति, पूजंति, वंदंति, णमंसंति, परिणिव्वाण, महाकल्लाणपुज्जं करंति अहमवि इह संतो तत्थ संताइयं णिच्चकालं अंचेमि, पूजेमि, वंदामि, णमंसामि, दुक्खक्खओ, कम्मक्खओ, बोहिलाहो, सुगइगमणं, समाहिमरणं, जिणगुणसंपत्ति होउ मज्झं।

इति निर्वाण भक्ति।





# अथ नंदीश्वर भक्तिः



त्रिदशपति मुकुट तटगत मणिगण, - करनिकर सलिल धारा धौत ।
क्रमकमल युगल जिनपति रुचिर, - प्रतिबिंब विलय विरहितनिलयान् ॥ १ ॥

निलयान हमिह महसाँ सहसा प्रणिपतन पूर्वमवनौम्यवनौ ।
त्रय्यां त्रय्या शुद्धया निसर्ग शुद्धान्वि शुद्धये घनरजसाम् ॥ २ ॥

भावनसुर भवनेषु द्वासप्तति शत सहस्र संख्याभ्य धिकाः ।
कोट्यः सप्त प्रोक्ता भवनानाँ भूरि तेजसाँभुवनानाम् ॥ ३ ॥

त्रिभुवन भूत विभूनाँ संख्याती तान्य संख्यगुण युक्तानि ।
त्रिभुवन जनन नयमनः प्रियाणि भवनानि भौमबिबुधनुतानि ॥ ४ ॥

यावन्ति सन्ति कान्तज्योतिर्लोकाधि देवता भिनुतानि ।
कल्पेऽनेक विकल्पे कल्पातीतेऽहमिन्द्र कल्पानल्पे ॥ ५ ॥

विंशतिरथ त्रिसहिता सहस्रगुणिता च सप्तनवतिप्रोक्ता ।
चतुरधिकाशीतिरतः पंचकशून्येन विनिह तान्यनघानि ॥ ६ ॥

अष्टा पंचाशदतश्चतुः शतानीह मानुषे च क्षेत्रे ।
लोका लोक विभाग प्रलोक नालोक संयुजाँ जयभाजाम् ॥ ७ ॥

नव नव चतुः शतानि चसप्त चनवतिः सहस्रगुणिताःषट्च ।
पंचाशत्पंच वियत्प्रहताः पुनरत्र कोटयोऽष्टौ प्रोक्ताः ॥ ८ ॥

एतावंत्येव सताम कृत्रिमाण्यथ जिनेशिनाँ भवनानि ।
भुवनत्रितये त्रिभुवन सुरसमिति समर्च्य मानसत्प्रतिमानि ॥ ९ ॥

वक्षार रुचक कुंडल रौप्य नगोत्तर कुलेषु कारनगेषु ।
कुरुषु च जिनभवनानि त्रिशतान्य धिकानि तानि षड्विंशत्या ॥१०॥

नन्दीश्वर सद्द्वीपे नन्दीश्वर जलधि परिवृते धृतशोभे ।
चन्द्रकर निकर संनिभरुन्द्र यशो विततदिङ् मही मंडलके ॥११॥

तत्रत्यांजन दधिमुख रतिकर पुरनगवराख्य पर्वत मुख्याः ।
प्रतिदिशमेषा मुपरि त्रयो दशेन्द्रा र्चितानि जिन भवनानि ॥१२॥

आषाढ़ कार्तिकाख्ये फाल्गुन मासे च शुक्ल पक्षे ऽष्टम्याः ।
आरम्याष्ट दिनेषु च सौधर्म प्रमुख बिबुधपतयो भक्त्या ॥१३॥
तेषु महामहमुचितं प्रचुराक्षतगंध पुष्पधूपैर्दिव्यैः ।
सर्वज्ञ प्रतिमानांमप्रतिमानां प्रकुर्वंते सर्वहितम् ॥१४॥
भेदेन वर्णना का सौधर्मः स्नपनकर्तृतामापन्नः ।
परिचारकभावमिताः शेषेन्द्रा रुन्द्र चन्द्र निर्मल यशसः ॥१५॥
मंगल पात्राणि पुनस्तद्देव्यो बिभ्रति स्म शुभ्रगुणाढ्याः ।
अप्सरसो नर्तक्यः शेषसुरास्तत्र लोकनाव्यग्रधियः ॥१६॥
वाचस्पति वाचामपि गोचरतांसं व्यतीत्य यत्क्रममाणम् ।
विबुध पति विहित विभवं मानुष मात्रस्य कस्य शक्तिः स्तोतुम् ॥१७॥
निष्टापित जिनपूजाश्चूर्णस्नपनेन दृष्ट विकृत विशेषाः ।
सुरपतयो नंदीश्वरजिनभवनानि प्रदक्षिणीकृत्य पुनः ॥१८॥
पंचसु मंदरगिरिषु श्रीभद्रशालनंदन सौमनसम् ।
पांडुकवनमिति तेषु प्रत्येकं जिनगृहाणि चत्वार्येव ॥१९॥
तान्यथ परीत्य तानि च नमसित्वा कृत सुपूजना स्तत्रापि ।
स्वास्पदमीयुः सर्वे स्वास्पदमूल्यं स्वचेष्टया संगृह्य ॥२०॥
सहतोरण सद्वेदीपरीत वनयाग वृक्ष मानस्तंभ ।
ध्वज पंक्ति दशक गोपुर चतुष्टय त्रितयशालमंडप वर्यैः ॥२१॥
अभिषेक प्रेक्षणिका क्रीडन संगीत नाटका लोकगृहैः ।
शिल्पिविकल्पित कल्पन संकल्पातीत कल्पनैः समुपुतैः ॥२२॥
वापीसत्पुष्करिणी सुदीर्घिकाद्यम्बु संसृतैः समुपेतैः ।
विकसित जलरुह कुसुमैर्नभस्यमानैः शशिग्रहर्क्षैः शरदि ॥२३॥
भृंगाराब्दक कलशाद्युपकरणैरष्ट शतक परिसंख्यानैः ।
प्रत्येकं चित्रगुणैः कृतझण झणनि नद वितत घंटाजालैः ॥२४॥
प्रभ्राजंते नित्यं हिरण्मयानीश्वरेशिनां भवनानि ।
गंधकुटीगतमृगपतिविष्टररुचिराणि विविध विभवयुतानि ॥२५॥
येषु जिनानां प्रतिमाः पंचशतशरासनोच्छ्रिताः सत्प्रतिमाः ।
मणिकनकरजत विकृता दिनकर कोटिप्रभाधिक प्रभदेहाः ॥२६॥

तानि सदा वंदेऽहं भानु प्रतिमानि यानि कानि च तानि।
यशसां महसां प्रतिदिश मतिशय शोभा विभांजि पापविभंजि ॥२७॥
सप्तत्यधिकशत प्रिय धर्म क्षेत्र गत तीर्थंकर वर वृषभान्।
भूत भविष्य त्संप्रतिकाल भवान्भव विहानये विनतोऽस्मि ॥२८॥
अस्याम वर्सापिण्यां वृषभजिनः प्रथमतीर्थंकर्ता भर्ता।
अष्टापद गिरि मस्तक गतस्थितो मुक्तिमाप पापान्मुक्तः ॥२९॥
श्रीवासुपूज्यभगवान् शिवासु पूजासु पूजितस्त्रि दशानां।
चम्पायां दुरितहरः परम पदं प्रापदापदामन्त गतः ॥३०॥
मुदित मति बलमुरारि प्रपूजितो जित कषाय रिपुरथजातः।
वृहदूर्जयन्तशिखरे शिखामणिस्त्रि भुवनस्य नेमिर्भगवान ॥३१॥
पावापुर वरसरसां मध्यगतः सिद्धि वृद्धि तपसां महसां।
वीरो नीरदनादो भूरिगुण श्चारुशोभमा स्पदमगमत् ॥३२॥
सम्मदकरि वनपरिवृत सम्मेद गिरीन्द्रमस्तके विस्तीर्णे।
शेषा ये तीर्थंकराः कीर्तिभृतः प्रार्थितार्थसिद्धिमवापन् ।३३॥
शेषाणां केवलिनां अशेणमत वेदिगण भृतां साधूनां।
गिरितल विवरदरी सरिदुरुवन तरु विटपिजलधिदहन शिखासु ॥३४॥
मोक्ष गति हेतु भूत स्थानानि सुरेन्द्र रुन्द्र भक्तिनुतानि।
मंगल भूतान्येतान्यंगो कृत धर्म कर्मणा म स्माकम् ॥३५॥
जिनपतयस्तत्प्रतिमा स्त दालयास्तन्निषद्यका स्थानानि।
ते ताश्च ते चतानि च भवन्तु भव घात हेतवो भव्यानाम् ।३६॥
संध्यासु तिसृषु नित्यं, पठेद्यदि स्तोत्रमेत दुतमयशसाम।
सर्वज्ञानां सार्वं लघु लभते श्रुतधरेडितं पदममितम् ॥३७॥
नित्यं निःस्वेदत्वं निर्मलता क्षीरगौररुधिरत्वं च।
स्वाद्याकृति संहनने सौरुप्यं सौरभं च सौलक्ष्यम् ॥३८॥
अप्रमित वीर्यता च प्रिय हित वादित्व मन्य दमित गुणस्य।
प्रथिता दशख्याताः स्वतिशय धर्माः स्वयंभुवो देहस्य ॥३९॥
गव्यूतिशत चतुष्टय सुभिक्षता गगन गमनम प्राणिवधः।
भुक्त्युपसर्गाभाव श्चतुरास्यत्वं च सर्व विद्येश्वरता ॥४०॥

अच्छायत्व मपक्ष्मस्पंदश्च सम प्रसिद्धनख केशत्वं।
स्वतिशयगुणा भगवतो घातिक्षयजा भवंति तेपि दशैव ॥४१॥
सार्वार्धमागधीया भाषा मैत्री च सर्वजनता विषया।
सर्वर्तु फलस्तबक प्रवालकुसुमोप शोभित तरु परिणामा ॥४२॥
आदर्शतल प्रतिमा रत्नमयी जायते महीच मनोज्ञा।
विहरण मन्वेत्यनिलः परमानंदश्च भवति सर्वजनस्य ॥४३॥
मरुतोऽपि सुरभिगंधव्यामिश्रा योजनांतरं — भूभागं।
व्युपशमितधूलि कंटक तृण कीटक शर्करोपलं प्रकुर्वन्ति ॥४४॥
तदनु स्तनितकुमारा विद्युन्माला विलासहास विभूषाः।
प्रकिरन्ति सुरभिगंधिं गंधोदक वृष्टिमाज्ञया त्रिदशपतेः ॥४५॥
वरपद्मराग केसर मतुलसुख स्पर्श हेममय दलनिचयम्।
पादन्यासे पद्मं सप्तपुरः पृष्ठतश्च सप्त भवंति ॥४६॥
फलभार नम्रशालिव्रीह्यादि समस्तसस्य धृतरोमांचा।
परिहृषितेव च भूमिस्त्रि भुवननाथस्य वैभवं पश्यंती ॥४७॥
शरदुदयविमलसलिलं सरइव गगनं विराजते विगतमलम्।
जहति च दिशस्तिमिरिकां विगतरजःप्रभृतिजिह्मताभावं सद्यः॥४८॥
एतेतेति त्वरितं ज्योतिर्व्यंतरदिवौ कसाममृत भुजः।
कुलिशभृदाज्ञापनया कुर्वन्त्यन्ये समन्ततो व्याह्वानम् ॥४९॥
स्फुरदरसहस्ररुचिरं विमल महारत्नकिरणनिकर परीतम्।
प्रहसित किरणसहस्र द्युति मंडलमग्रगामि धर्मसुचक्रम् ॥५०॥
इत्यष्टमगलं च स्वादर्शप्रभृति भक्तिराग परीतैः।
उपकल्प्यन्ते त्रिदशैरेतेऽपि निरुपमाति विशेषाः ॥५१॥
वैडूर्यरुचिरविटप प्रवाल मृदुपल्लवो पशोभितशाखः।
श्रीमानशोक वृक्षो वरमरकत पत्रगहन बहलच्छायः ॥५२॥
मंदारकुंद कुवलयनी लोत्पल कमलमालती बकुलाद्यैः।
समद भ्रमर परीतैर्व्यामिश्रा पतति कुसुमवृष्टिर्नभसः ॥५३॥
कटककटि सूत्र कुंडल केयूर प्रभृतिभूषितांगौ स्वंगौ।
यक्षौ कमलदलाक्षौ परिनिक्षिपतः सलील चामर युगलम् ॥५४॥

आकस्मिकमिव युगपद्दिवसकर सहस्रमपगत व्यवधानम्।
भामंडल मवि भावित रात्रिंदिव भेद मतित रामाभाति ॥५५॥

प्रबल पवना भिघात प्रक्षुभित समुद्र घोषमन्द्र ध्वानम्।
दंध्वन्यते सुवीणा वंशादि सुवाद्य दुन्दुभिस्ताल समम् ॥५६॥

त्रिभुवन पतिता लाँछर्नामिदुत्रय तुल्यमतुल मुक्ताजालम्।
छत्रत्रयं च सुबृहद्वैडूर्य विक्लृप्त दंडमधिक मनोज्ञम् ॥५७॥

ध्वनिरपि योजनमेकं प्रजायते श्रोत्रहृदय हारिगंभीरः।
ससलिल जलधर पटल ध्वनितमिव प्रविततान्तराशावलयम् ॥५८॥

स्फुरितांशु रत्नदीधिति परिविच्छुरितामरेंद्र चापच्छायम्।
ध्रियते मृगेंद्रवर्यैः, स्फटिक्शिलाघटित सिंहविष्टरमतुलम् ॥५९॥

यस्येह चतुस्त्रिंशत्प्रवरगुणा प्रातिहार्य लक्ष्म्यश्चाष्टौ।
तस्मै नमो भगवते त्रिभुवनपरमेश्वरार्हते गुणमहते ॥६०॥

— कायोत्सर्ग आलोचना —

इच्छामि भंते! णंदीसरभत्तिकाउस्सग्गो कओ तस्सालोचेउं। णंदीसरदीवम्मि, चउदिसि विदिसासु, अंचणदधिमुहरदिकरपुरणगवरेसु जाणि जिणचेइयाणि ताणि सव्वाणि तिसुवि लोएसु भवणवासिय वाणवितरजोइसिगकप्पवासियत्ति चउविहा देवा सपरिवारा दिव्वेहि गंधेहि, दिव्वेहि पुप्फेहि, दिव्वेहि धुव्वेहि, दिव्वेहि चुण्णेहि, दिव्वेहि वासेहि, दिव्वेहि ण्हाणेहि, आसाढकत्तिय फागुणमासाणं अठ्ठमिमाइं काउण जाव पुण्णिमंति णिच्चकालं अंचति, पूजंति, वंदंति, णमंसंति। णंदीसरमहाकल्लाणं करंति अहमवि इह संतो तत्थ संताइं णिच्च कालं अंचेमि, पूजेमि, वंदामि, णमंसामि, दुक्खक्खओ, कम्मक्खओ, बोहिलाहो, सुगइगमणं, समाहिमरणं, जिण गुण संपत्ति होउ मज्झं।

— इति नदीश्वर भक्ति समाप्त —



ॐ ह्रीं

# चैत्य भक्तिः



ओं नमः सर्वज्ञाय।

श्रीगौतमादि पदमद्भुत पुण्यबंध, मुद्योतिता खिलम-मोघमघ प्रणाशम्।
वक्ष्ये जिनेश्वरमहं प्रणिपत्य तथ्यं, निर्वाण कारण मशेष जगद्धि तार्थम् ॥

जयति भगवान् हेमाम्भोजप्रचारविजृम्भिता।
वमरमुकुटच्छायोद्गीर्ण प्रभापरि चुम्बितौ ॥
कलुषहृदया मानोद्भ्रान्ताःपरस्परवैरिणः।
विगतकलुषाः पादौ यस्य प्रपद्य विशश्वसुः ॥१॥

तदनु जयति श्रेयान्धर्मः प्रवृद्धमहोदयः,
कुगति विपथ क्लेशाद्योसौ विपाशयति प्रजाः।
परिणत नय स्यांगी भावाद्विविक्त विकल्पितम्,
भवतु भवत स्त्रातृत्रेधा जिनेंद्रवचोऽमृतम् ॥२॥

तदनु जयताज्जैनी वित्तिः प्रभंगतरंगिणी,
प्रभव विगम ध्रौव्यद्रव्य स्वभाव विभाविनी।
निरुपमसुखस्येदं द्वारं विघट्य निरर्गलम्,
विगतरजसं मोक्षं देयान्निरत्य यमव्ययम् ॥३॥

अर्हत्सिद्धाचार्यो पाध्यायेभ्यस्तथाच साधुभ्यः।
सर्वजद्वंदेभ्यो नमोस्तु सर्वत्र सर्वेभ्यः ॥४॥
मोहादि सर्व दोषारि घातकेभ्य. सदाहतरजोभ्यः।
विरहित रहस्कृतेभ्यः पूजार्हेभ्यो नमोऽर्हद्भ्यः ॥५॥

क्षान्त्यार्जवादिगुणगणसुसाधनं सकललोकहितहेतुं।
शुभधामनि धातारं वंदे धर्म जिनेन्द्रोक्तम् ॥६॥
मिथ्याज्ञानतमोवृतलोकैकज्योतिर मितगमयोगि।
सांगोपांगमजेयं जैनं वचनं सदा वंदे ॥७॥

भवनविमानज्योतिर्व्यंतरनरलोकविश्वचैत्यानि।
त्रिजगदभिवंदितानां त्रेधा वंदे जिनेन्द्राणाम् ॥८॥

भुवनत्रयेऽपि भुवन त्रयाधिपाम्यर्च्य तीर्थ कर्तृणां ।
वन्दे भवाग्नि शान्त्यै विभवानामालयालीस्ताः ॥९॥
इति पंचमहापुरुषाः प्रणुता जिनधर्म वचन चैत्यानि ।
चैत्यालयाश्च विमलां दिशन्तु बोधिं बुध जनेष्टाम् ॥१०॥
अकृतानि कृतानि चाप्रमेय द्युतिमंति द्युतिमत्सु मंदिरेषु ।
मनुजामरपूजितानि वन्दे,प्रतिबिंबानि जगत्त्रये जिनानाम् ॥११॥
द्युति मण्डल भासुरान्गयष्टोः, प्रतिमा अप्रतिमा जिनोत्त मानाम् ।
भुवनेषु विभूतये प्रवृत्ता, वपुषा प्राञ्जलिरस्मि वन्दमानः ॥१२॥
विगतायुध विक्रिया विभूषाः, प्रकृतिस्थाः कृतिनां जिनेश्वराणां ।
प्रतिमाः प्रतिमा गृहेषु कान्त्या, प्रतिमाः कल्मष शान्तयेऽभिवंदे ॥१३॥
कथयन्ति कषाय मुक्ति लक्ष्मीं, परया शांततया भवान्तकानाम् ।
प्रणमाम्य भिरूप मूर्ति मन्ति, प्रतिरूपाणि विशुद्धये जिनानाम् ॥१४॥
यदिदं मम सिद्धभक्ति नीतं, सुकृतं दुष्कृत वर्त्मरोधि तेन ।
पटुना जिनधर्म एव भक्ति, र्भवताज्जन्मनि जन्मनि स्थिरामे ॥१५॥
अर्हतां सर्वभावानां दर्शनज्ञान संपदाम् ।
कीर्तयिष्यामि चैत्यानि यथाबुद्धि विशुद्धये ॥१६॥
श्रीमद्भावन वासस्था स्वयं भासुर मूर्तयः ।
वन्दिता नो विधेयासुः प्रतिमाः परमां गतिम् ॥१७॥
यावंति संति लोकेऽस्मिन्न कृतानि कृतानि च ।
तानि सर्वाणि चैत्यानि वन्दे भूयांसि भूतये ॥१८॥
ये व्यंतर विमानेषु स्थेयांसः प्रतिमागृहाः ।
ते च संख्यामति क्रान्ताः संतु नो दोष विच्छिदे ॥१९॥
ज्योतिषामथ लोकस्य भूतयेद्भुत संपदः ।
गृहा स्वयंभुवः संति विमानेषु नमामि तान् ॥२०॥
वंदे सुर किरीटा ग्रमणिच्छायाभि षेचनम् ।
याः क्रमेणैव सेवन्ते तदर्च्चाः सिद्धि लब्धये । २१॥
इति स्तुति पथातीत श्रीभृतामर्हतां मम ।
चैत्यानामस्तु संकीर्तिः सर्वास्रव निरोधिनी ॥२२॥

अर्हन्महानदस्य त्रिभुवन भव्यजनतीर्थ यात्रिक दुरितम्।
प्रक्षालनैक कारण मतिलौकिक कुहकतीर्थ मुत्तमतीर्थम् ॥२३॥
लोका लोक सुतत्व प्रत्यवबोधनसमर्थ दिव्यज्ञान।
प्रत्यहवहत्प्रवाहव्रतशीला मल विशाल कूल द्वितयम् ॥२४॥
शुक्ल ध्यानस्तिमितस्थितराजद्राज हंसराजितम सकृत्।
स्वाध्यायमंद्रघोषं नानागुणसमिति गुप्तिसिकतासुभगम् ॥२५॥
क्षान्त्यावर्त सहस्रं सर्वदयाविक च कुसुमविल सल्लतिकम्।
दुःसह परीषहाख्य द्रुत तररंगत्तरंग भंगुर निकरम् ॥२६॥
व्यपगत कषाय फेन रागद्वेषादि दोषशैवलरहितं।
अत्यस्तमोह कर्द्दमसति दूरनिरस्तमरण मकरप्रकरम् ॥२७॥
ऋषिवृषभ स्तुति मंद्रोद्रेकित निर्घोष विविध विहगध्वानं।
विविधतपोनिधिपुलिनं सास्रवसंवरणनिर्जरानिःस्रवणम् ॥२८॥
गणधरचक्रधरेन्द्र प्रभृति महाभव्य पुंडरीकैः पुरुषैः।
बहुभिः स्नातं भक्त्या कलिकलुषमलापकर्षणार्थममेयम् ॥२९॥
अवतीर्णवतः स्नातुं ममापि दुस्तरसमस्तदुरितं दूरम्।
व्यवहरतु परम पावन मनन्यजय्य स्वभाव भाव गंभीरम् ॥३०॥

पृथ्वी छन्द.—

आताम्रनयनोत्पलं सकल कोप वन्हेर्जयात्।
कटाक्षशर मोक्ष हीनम विकारतोद्रे कतः॥
विषादमदहानितः प्रहसितायमान सदा।
मुखं कथयतीव ते हृदय शुद्धिमात्यन्तिकीम् ॥३१॥

निराभरण भासुरं विगतरागवेगोदयात्।
निरंबरमनोहरं प्रकृति रूप निर्दोषतः॥
निरायुध सुनिर्भयं विगतहिंस्य हिंसक्रमात्।
निरामिष सुतृप्तिम द्विविधवेदनानां क्षयात् ॥३२॥

मितस्थितनखांगजं गतरजोमल स्पर्शनम्।
नवांबुरुह चंदन प्रतिमदिव्यगंधोदयम्॥
रवीन्दुकुलिशादि दिव्य बहुलक्षणालंकृतम्।
दिवाकर सहस्र भासुरम पीक्षणानां प्रियम् ॥३३॥

हितार्थपरिपंथिभिः प्रबलराग मोहादिभिः, कलंकितमना जनोयदभिवीक्ष्य शोशुध्यते।
सदाभिमुखमेव यज्जगति पश्यतां सर्वतः, शरद्विमल चन्द्रमण्डल मिवोत्थितं दृश्यते ॥३४॥

तदेतदमरेश्वर प्रचलमौलि माला मणि, स्फुरत्किरण चुंबनीयचरणार विन्दद्वयम्।
पुनातु भगवज्जिनेन्द्र तव रूपमन्धीकृतम्, जगत्सकल मन्यतीर्थ गुरुरूप दोषोदयैः ॥३५॥

मानस्तम्भाः सरांसि प्रविमलजलसत्खातिका पुष्पवाटी।
प्राकारो नाट्यशाला द्वितयमुपवनं वेदिकांतर्ध्वजाद्याः ॥

शालःकल्प द्रुमाणां सुपरिवृतवनं स्तूपहर्म्यावली च।
प्राकारः स्फाटिकोन्त र्नृसुरमुनिसभा पीठिकाग्रे स्वयंभूः ॥३६॥

वर्षेषु वर्षान्तर पर्वतेषु नंदीश्वरे यानि च मंदरेषु।
यावन्ति चैत्यायतनानि लोकेसर्वाणि वंदे जिनपुंगवानाम् ॥३७॥

अवनित लगतानां कृत्रिमाऽकृत्रिमाणां, वनभवनगतानां दिव्यवैमानिकानां।
इह मनुजकृतानां, देवराजार्चितानां जिनवर निलयानां भावतोऽहं स्मरामि ॥३८॥

जम्बू धातकि ष्पुकरार्द्ध वसुधा क्षेत्र त्रये ये भवाः।
चंद्रांभोज शिखंडि कंठ कनक प्रावृड्घनाभा जिनाः ॥

सम्यग्ज्ञान चरित्र लक्षणधरा दग्धाष्ट कर्मेन्धनाः।
भूतानागत वर्तमान समये तेभ्यो जिनेभ्यो नमः ॥३९॥

श्रीमन्मसेरौ कुलाद्रौ रजतगिरिवरे शाल्मलौ जंबुवृक्षे।
वक्षारे चैत्यवृक्षे रतिकर रुचके कुंडले मानुषांके ॥

इष्वाकारेंजनाद्रौ दधिमुख शिखरे व्यंतरे स्वर्गलोके।
ज्योतिर्लोकेऽभि वंदे भुवन महितले यानि चैत्यानि तानि ॥४०॥

देवासुरेन्द्र नरनाग समर्चितेभ्यः, पापप्रणाशकर भव्य मनोहरेभ्यः।
घंटाध्वजादिपरिवार विभूषितेभ्यो नित्यं नमो जगति सर्वजिनालयेभ्यः ॥४१॥

कायोत्सर्ग आलोचना।

इच्छामि भंते ! चेइयभत्ति काउस्सग्गो कओ तस्सा लोचेउं। अहलोयतिरिय-लोयउढ्ढलोयम्मि किट्टिमाकिट्टिमाणि जाणि जिणचेइयाणि ताणि सव्वाणि तिसुवि लोएसु भवणवासियवाणवितरजोइसिय कप्पवासियत्ति चउविहादेवा सपरिवारा दिव्वेण गंधेण, दिव्वेण चुण्णेण, दिव्वेण वासेण, दिव्वेण ण्हाणेण, णिच्चकालं अंचंति, पुज्जंति वंदंति, णमंसंति। अहमवि इह संतो तत्थ संताई णिच्चकालं अंचेमि, पूजेमि, वंदामि, णमंसामि, दुक्खक्खओ, कम्मक्खओ बोहिलाहो, सुगइगमणं, समाहिमरणं, जिणगुण संपत्ति होउ मज्झं। —इति चैत्य भक्ति समाप्तम्—



श्री स्वामी समन्तभद्राचार्य विरचितम्

# बृहत्स्वयम्भू स्तोत्रम्



स्वयम्भुवा भूतहितेन भूतले, समञ्जसज्ज्ञान विभूति चक्षुषा।
विराजितं येन विधुन्वता तमः, क्षपाकरेणेव गुणोत्करैः करैः ॥ १ ॥
प्रजापतिर्यः प्रथमं जिजीविषुः, शशास कृष्यादिषु कर्मसु प्रजाः।
प्रबुद्धतत्त्वः पुनरद्भुतोदयो, ममत्वतो निर्विविदे विदांवरः ॥ २ ॥
विहाय यः सागरवारि वाससं, वधूमिवेमां वसुधावधूं सतीम्।
मुमुक्षुरिक्ष्वाकु कुलादि रात्मवान्, प्रभुः प्रवव्राज सहिष्णुरच्युतः ॥ ३ ॥
स्वदोष मूलं स्वसमाधि तेजसा, निनाय यो निर्दय भस्मसात्क्रियाम्।
जगाद तत्त्वं जगतेऽर्थिनेऽञ्जसा, बभूव च ब्रह्मपदा मृतेश्वरः ॥ ४ ॥
स विश्वचक्षुर्वृषभोऽर्चितः सतां, समग्रविद्यात्म वपुर्निरञ्जनः।
पुनातु चेतो मम नाभिनन्दनो, जिनो जित क्षुल्लक वादि शासनः ॥ ५ ॥

इत्यादि जिन स्तोत्रम् ॥१॥

यस्य प्रभावात्त्रि दिवच्युतस्य, क्रीडास्वपि क्षीवमुखार विन्दः।
अजेयशक्तिर्भुवि बन्धुवर्ग, श्चकार नामाजित इत्यवन्ध्यम् ॥ ६ ॥
अद्यापि यस्याजित शासनस्य, सतां प्रणेतुः प्रतिमंगलार्थम्।
प्रगृह्यते नाम परं पवित्रं, स्वसिद्धि कामेन जनेन लोके ॥ ७
यः प्रादुरासीत्प्रभुशक्ति भूम्ना, भव्या शयालीन कलंक शान्त्यै।
महा मुनिर्मुक्तघनो पदेहो, यथारविन्दाभ्यु दयाय भास्वान् ॥ ८ ॥
येन प्रणीतं पृथु धर्म तीर्थं, ज्येष्टं जनाः प्राप्य जयन्ति दुःखम्।
गांगं ह्रदं चंदन पंक शीतं, गज प्रवेका इव धर्मतप्ताः ॥ ९ ॥
स ब्रह्मनिष्टः सममित्रशत्रु, विद्या विनिर्वान्त कषायदोषः।
लब्धात्म लक्ष्मी रजितोऽजितात्मा, जिनः श्रियंमे भगवान् विधत्ताम् ॥१०॥

इत्याजित जिन स्तोत्रम् ॥२॥

त्वं शम्भवः संभवतर्षरोगैः, संतप्यमानस्य जनस्य लोके।
आसीरिहाकस्मिक एव वैद्यो, वैद्यो यथा नाथ रुजां प्रशान्त्यै ॥११॥
अनित्यमत्राण महं क्रियाभिः, प्रसक्त मिथ्या ध्यवसाय दोषम्।
इदं जगज्जन्मजरान्तकार्तं, निरञ्जनां शान्तिमजीगमस्त्वम् ॥१२॥
शतहृदोन्मेषचलं हि सौख्यं, तृष्णामयाप्यायनमात्रहेतुः।
तृष्णाभिवृद्धिश्च तपत्यजस्रं, तापस्तदायासयतीत्यवादीः ॥१३॥
बंधश्च मोक्षस्च तयोश्च हेतु, बद्धश्च मुक्तश्च फलं च मुक्तेः।
स्याद्वादनो नाथ तवैव युक्तं, नैकान्तदृष्टेस्त्वमतोऽसि शास्ता ॥१४॥
शक्रोऽप्यशक्तस्तव पुण्यकीर्तेः, स्तुत्यां प्रवृत्तः किमु मादृशोऽज्ञः।
तथापि भक्त्या स्तुतपादपद्मो, ममार्यं देयाः शिवतातिमुच्चैः ॥१५॥

इति शंभव जिन स्तोत्रम् ॥३॥

गुणाभिनन्दादभिनन्दनो भवान्, दयावधूं क्षान्तिसखीमशिश्रियत्।
समाधितन्त्रस्तदुपोपपत्तये, द्वयेन नैर्ग्रन्थ्यगुणेन चायुजत् ॥१६॥
अचेतने तत्कृतबन्धजेऽपि, ममेदमित्या भिनिवेशकग्रहात्।
प्रभंगुरे स्थावरनिश्चयेन च, क्षतं जगत्तत्त्वमजिग्रहद्भवान् ॥१७॥
क्षुदादि दुःख प्रतिकारतःस्थिति, नंचेन्द्रियार्थप्रभवाल्पसौख्यतः।
ततो गुणो नास्ति च देहदेहिनोरितीदमित्थं भगवान् व्यजिज्ञपत् ॥१८॥
जनोऽतिलोलोऽप्यनुबन्धदोषतो भयादकार्येष्विह न प्रवर्त्तते।
इहाप्यमुत्राप्यनुबन्धदोषवित्कथं सुखे संसजतीति चाब्रवीत् ॥१९॥
सचानुबन्धोऽस्य जनस्यताप, कृत्तृषोऽभिवृद्धिःसुखतो न च स्थितिः।
इति प्रभो लोकहितं यतोमतं, ततो भवानेव गतिः सतां मतः ॥२०॥

इत्यभिनन्दन जिन स्तोत्रम् ॥४॥

अन्वर्थसंज्ञः सुमतिर्मुनिस्त्वं, स्वयंमतं येन सुयुक्ति नीतम्।
यतश्च शेषेषु मतेषु नास्ति, सर्वक्रिया कारक तत्त्वसिद्धिः ॥२१॥
अनेममेकं च तदेव तत्त्वं भेदान्वयज्ञानमिदं हि सत्यम्।
मृषोपचारोऽन्यतरस्य लोपे, तच्छेषलोपोऽपि ततोऽनुपाख्यम् ॥२२॥

सतः कथंचित्तदसत्वशक्तिः, खे नास्ति पुष्पं तरुषु प्रसिद्धम्।
सर्वस्वभाव च्युतमप्रमाणं, स्ववाग्विरुद्धं तव दृष्टितोऽन्यत् ॥२३॥

न सर्वथा नित्य मुदेत्य पैति, न च क्रियाकारकमत्र युक्तम्।
नैवासतो जन्म सतो न नाशो, दीपस्तमः पुद्गल भावतोऽस्तिः ॥२४॥

विधिर्निषेधश्च कथंचि दिष्टौ, विवक्षया मुख्यगुण व्यवस्था।
इति प्रणीतिः सुमते स्तवेयं, मतिप्रवेकः स्तुवतोऽस्तु नाथ ॥२५॥

इति सुमति जिन स्तोत्रम् ॥५॥

पद्मप्रभः पद्मपलाशलेश्यः, पद्मालयालिंगित चारु मूर्तिः।
बभौ भवान् भव्य पयोरुहाणां, पद्माकराणामिव पद्म बन्धुः ॥२६॥

बभार पद्मां च सरस्वतीं च, भवान्पुरस्तात्प्रति मुक्ति लक्ष्म्याः।
सरस्वतीमेव समग्र शोभां, सर्वज्ञ लक्ष्मीं ज्वलितां विमुक्तः ॥२७॥

शरीर रश्मि प्रसरः प्रभोस्ते, बालार्क रश्मिच्छ विरालिलेप।
नरामराकीर्णसभां प्रभा व, च्छैलस्य पद्माभमणेः स्वसानुम् ॥२८॥

नभस्तलं पल्लव यन्निव त्वं, सहस्र पत्राम्बुज गर्भ चारैः।
पादाम्बुजैः पातित मार दर्पो, भूमौ प्रजानां विजहर्ष भूत्यै ॥२९॥

गुणाम्बुधे विप्रुषमप्य जस्रं, नाखण्डल स्तोतुमलं तवर्षेः।
प्रागेव मादृक्किमु तांति भक्ति, र्मां बाल माला पयतीद मित्थम् ॥३०॥

इति पद्मप्रभ जिन स्तोत्रम् ॥६॥

स्वास्थ्यं यदात्यन्तिक मेष पुंसां, स्वार्थो न भोगः परिभंगुरात्मा।
तृषोऽनुषंगान्न च ताप शांति, रितीद माख्यद्भगवान् सुपार्श्वः ॥३१॥

अजंगमं जंगमनेय यन्त्रं, यथा तथा जीवधृतं शरीरम्।
बीभत्सु पूति क्षयि तापकं च, स्नेहो वृथात्रेति हितं त्वमाख्यः ॥३२॥

अलंघ्य शक्ति र्भवितव्य तेयं, हेतुद्वया विष्कृत कार्यलिंगा।
अनीश्वरो जन्तुरहं क्रियार्त्तः, संहत्य कार्येष्विति साध्ववादीः ॥३३॥

विभेति मृत्योर्न ततोऽस्ति मोक्षो, नित्यंशिवं वाञ्छतिनास्य लाभः।
तथापि बालो भय काम वश्यो, वृथा स्वयं तप्यत इत्यवादीः ॥३४॥

सर्वस्य तत्त्वस्य भवान् प्रमाता, मातेव बालस्य हितानुशास्ता ।
गुणावलोकस्य जनस्य नेता, मयापि भक्त्या परिणूयसेऽद्य ।।३५।।

इति सुपार्श्वजिन स्तोत्रम् ।।७।।

चन्द्रप्रभं चन्द्रमरीचि गौरं, चन्द्रं द्वितीयं जगतीव कान्तम् ।
वन्देऽभिवन्द्यं महतामृषीन्द्रं, जिनं जितस्वान्त कषायबन्धम् ।।३६।।

यस्यांग लक्ष्मी परिवेष भिन्नं, तमस्तमोरेरिव रश्मि भिन्नम् ।
ननाश वाह्यं बहुमानसं च, ध्यान प्रदीपाति शयेन भिन्नम् ।।३७।।

स्वपक्ष सौ स्थित्य मदावलिप्ता, वार्कासिंह नार्दविमदा बभूवुः ।
प्रवादिनो यस्य मदार्द्रगण्डा, गजा यथा केशरिणो निनादैः ।।३८।।

यः सर्वलोके परमेष्टितायाः, पदं वभूवाद्भुत कर्म तेजाः ।
अनन्त धामाक्षरविश्व चक्षुः, समेतदुःख क्षय शासनश्च ।।३९।।

स चन्द्रमा भव्य कुमुद्वतीनां, विपन्न दोषाभ्र कलंकलेपः ।
व्याकोशवांगन्याय मयूखमालः, पूयात् पवित्रो भगवान्मनो मे ।।४०।।

इति चन्द्रप्रभ जिन स्तोत्रम् ।।८।।

एकान्त दृष्टि प्रतिषेधि तत्त्वं, प्रमाणसिद्धं तद तत्स्वभावम् ।
त्वया प्रणीतं सुविधे स्वधाम्ना, नैतत्स मालीढपदं त्वदन्यैः ।।४१।।

तदेव च स्यान्न तदेव च स्या, त्तथा प्रतीतेस्तव तत्कथंचित् ।
नात्यन्तम न्यत्व मनन्यता च, विधेर्निषेधस्य च शून्यदोषात् ।।४२।।

नित्यं तदे वेदमिति प्रतीतेर्न, नित्य मन्य त्प्रति पत्तिसिद्धेः ।
न तद्विरुद्धं बहिरन्तरंग, निमित्त नैमित्तिक योगतस्ते ।।४३।।

अनेकमेकं च पदस्य वाच्यं, वृक्षा इति प्रत्ययवत्प्रकृत्या ।
आकांक्षिणः स्यादिति वै निपातो, गुणानपेक्षे नियमेऽपवादः ।।४४।।

गुणप्रधानार्थमिदं हि वाक्यं, जिनस्य ते तद्द्विषतामपथ्यम् ।
ततोऽभिवन्द्यं जगदीश्वराणां, ममापि साधोस्तव पादपद्मम् ।।४५।।

इति सुविधि जिन स्तोत्रम् ।।९।।

न शीतलाश्चन्दन चन्द्र रश्मयो: न गॉगमम्भो न च हारयष्टय:।
यथा मुनेस्तेऽनघ वाक्यरश्मय:, शमाम्बुगर्भा: शिशिराविपश्चितां ।।४६।।

सुखाभिलाषा नलदाह मूर्च्छितं, मनो निजं ज्ञानमयामृताम्बुभि:।
विदिध्यपस्त्वं विषदाह मोहितं, यथा भिषग्मन्त्रगुणै: स्वविग्रहं ।।४७।।

स्वजीविते कामसुखे च तृष्णया, दिवा श्रमार्त्ता निसिशेरते प्रजा:।
त्वमार्य्य नक्तं दिवमप्रमत्तवान, जागरेवात्म विशुद्ध वर्त्मनि ।।४८।।

अपत्य वित्तोत्तर लोक तृष्णया, तपस्विन: केचन कर्म कुर्वते।
भवान्पुनर्जन्म जराजिहासया, त्रयी प्रवृति शमधीर वारुणात् ।।४९।।

त्वमुत्तम ज्योतिरज: क्वनिर्वृत:, क्व ते परे बुद्धिलवोद्ध वक्षता:।
तत: स्वनिश्रेयस भावना परै, बुंध प्रवेकैर्जिन शीतलेढ्यसे ।।५०।।

इति शीतलेजिनस्तोत्रम् ।।१०।।

श्रेयान् जिन:श्रेयसि वर्त्मनीमा:, श्रेय: प्रजा: शासव जेयवाक्य:।
भवॉश्चकासे भुवनत्रये ऽस्मिन्नेको, यथा वीतघनो विवस्वान् ।।५१।।

विधिर्विषक्त प्रतिषेध रूप:, प्रमाण मत्रान्य तरत्प्रधानम्।
गुणो परो मुख्य नियाम हेतुर्नय:, सदृष्टॉत समर्थ नरते ।।५२।।

विवक्षितो मुख्य इतीष्यतेऽन्यो, गुणो विवक्षो न निरात्म कस्ते।
तथारि मित्रानुभयादिशक्ति, र्द्वयावधि: कार्य्यकरं हि वस्तु ।।५३।।

दृष्टांत सिद्धा वुभयोर्विवादे, साध्यं प्रसिद्ध्येन्न तु तादृगस्ति।
यत्सर्वथैकान्त नियाम दृष्टं, त्वदीय दृष्टिर्विभवत्य शेषे ।।५४।।

एकान्त दृष्टि प्रतिषेध सिद्धि, र्न्यायेषु भिर्मोहरिपुं निरस्य।
असि स्म कैवल्य विभूति सम्राट, ततस्त्व मर्हन्नसि मेस्तवार्ह: ।।५५।।

इति श्रेयास जिन स्तोत्रम् ।।११।।

शिवासु पूज्योऽभ्युदय क्रियासु, त्वं वासुपूज्य स्त्रिदशेन्द्र पूज्य:।
मयापि पूज्योऽल्पधिया मुनीन्द्र, दीपार्चिषार्कि तपनो न पूज्य: ।।५६।।

न पूजयार्थस्त्वयि वीतरागे, न निन्दया नाथ विवान्तवैरे।
तथापि ते पुण्यगुण स्मृतिर्न:, पुनातु चित्तं दुरिताञ्जनेभ्य: ।।५७।।

पूज्यं जिनं त्वार्चयतो जनस्थं, सावद्यलेशो बहुपुण्यराशौ।
दोषाय नालं कणिका विषस्य, न दूषिका शीतशिवाम्बुराशौ ॥५८॥
यद्वस्तु बाह्यं गुणदोषसूते, निमित्तमभ्यन्तर मूलहेतोः।
अध्यात्म वृत्तस्य तदंगभूत, मभ्यन्तर केवलमप्यलं ते ॥५९॥
बाह्येतरोपाधि समग्रतेयं कार्येषु ते द्रव्यगतः स्वभावः।
नैवान्यथा मोक्षविधिश्च पुंसां, तेनाभिवन्द्यस्त्वमृषिबुधानाम् ॥६०॥

इति वासुपूज्य जिन स्तोत्रम् ॥१२॥

य एव नित्यक्षणिकादयो नया, मिथोऽनपेक्षाः स्वपरप्रणाशिनः।
त एव तत्त्वं विमलस्य ते मुनेः, परस्परेक्षाः स्वपरोपकारिणः ॥६१॥
यथैकशः कारकमर्थसिद्धये, समीक्ष्य शेषं स्वसहायकारकम्।
तथैव सामान्यविशेष मातृका, नयास्तवेष्टा गुणमुख्यकल्पतः ॥६२॥
परस्परेक्षान्वय भेद लिंगतः, प्रसिद्ध सामान्य विशेषयोस्तव।
समग्रतास्ति स्वपरावभासकं, यथा प्रमाणं भुवि बुद्धिलक्षणम् ॥६३॥
विशेषवाच्यस्य विशेषणं वचो, यतोविशेष्यं विनियम्यते च यत्।
तयोश्च सामान्यमतिप्रसज्यते, विवक्षितात्स्यादितितेऽन्यवर्जनम् ॥६४॥
नयास्तव स्यात्पदसत्यलाञ्छिता, रसोपविद्धा इव लोह धातवः।
भवन्त्यभिप्रेतगुणा यतस्ततो, भवन्तमार्याः प्रणिताहितैषिणः ॥६५॥

इति विमल जिन स्तोत्रम् ॥१३॥

अनन्तदोषाशयविग्रहो ग्रहो, विषंग वान्मोहमयश्चिरं हृदि।
यतो जितस्तत्त्वरुचौ प्रसीदता, त्वया ततोभूर्भगवाननन्तजित् ॥६६॥
कषायनाम्नां द्विषतां प्रमाथिनाम, शेषयन्नाम भवानशेषवित्।
विशोषणं मन्मथदुर्मदामयं, समाधिभषज्य गुणैर्व्यलीनयन् ॥६७॥
परिश्रमाम्बुर्भयवीचिमालिनी, त्वया स्वतृष्णासरिदार्य शोषिता।
असंगघर्मार्कं गभस्ति तेजसा, परं ततो निर्वृतिधाम तावकम् ॥६८॥
सुहृत्त्वयि श्रीसुभगत्वमश्नुते, द्विषंत्वयिरं प्रत्यय वत्प्रलीयते।
भवानुदासी नत मस्त योरपि, प्रभो प चित्रमिदं तवेहितम् ॥६९॥
त्वमीदृशस्तादृश इत्ययं मम, प्रलापलेशो ऽल्पमतेर्महामुने।
अशेषमाहात्म्यमनीर यन्नपि, शिवाय संस्पर्श इवामृताम्बुधेः ॥७०॥

इतिअनन्त जिन स्तोत्रम् ॥१४॥

धर्म तीर्थ मनघं प्रवर्त्तयन्, धर्म इत्यनुमतः सतां भवान् ।
कर्म कक्ष मदहत्तपोऽग्निभिः, शर्म शाश्वतमवाप शङ्करः । ७१॥
देवामानव निकाय सत्तमै, रेजिषे परिवृतो वृतो बुधैः ।
तारका परिवृत्तोऽतिपुष्कलो, व्योमनीव शशलाञ्छनोऽमलः ॥७२॥
प्रातिहार्य विभवैः परिष्कृतो, देहतोऽपि विरतो भवानभूत ।
मोक्ष मार्गमशिषन्नरामरान्नापि, शासन फलैषणातुरः ॥७३॥
काय वाक्य मनसां प्रवृत्तयो, नाऽभवंस्तव मुनेश्चिकीर्षया ।
नासमीक्ष्यभवतः प्रवृत्तयोधीर, तावकमचिन्त्य मीहितम् ॥७४॥
मानुषीं प्रकृतिमभ्यतीतवान्, देवतास्वपि च देवता यतः ।
तेन नाथ परमासि देवता, श्रेयसे जिनवृष प्रसीद नः ॥७५॥

इति धर्म जिन स्तोत्रम् ॥१५॥

विधाय रक्षां परतः प्रजानां, राजा चिरंयोऽप्रतिमप्रतापः ।
व्यधात्पुरस्तात्स्वत एव शान्ति, र्मुनिर्दया मूर्तिरिवाघ शान्तिम् ॥७६॥
चक्रेण यः शत्रुभयं करेण, जित्वा नृपः सर्वनरेन्द्र चक्रम् ।
समाधि चक्रेण पुनर्जिगाय, महोदयो दुर्जयमोह चक्रम् ॥७७॥
राजश्रिया राजसु राजसिंहो, रराज यो राजसु भोगतन्त्रः ।
आर्हन्त्यलक्ष्म्या पुनरात्मतन्त्रो, देवासुरो दारसभे रराज ॥७८॥
यस्मिन्न भूद्राजनि राजचक्रं, मुनौ दयादीधिति धर्म चक्रम् ।
पूज्ये मुहुः प्राञ्जलि देवचक्रं, ध्यानोन्मुखे ध्वंसिकृतान्तचक्रम् ॥७९॥
स्वदोषशान्त्याविहितात्मशांतिः, शान्तेर्विधाता शरणं गतानाम् ।
भूयाद्भव क्लेश भयोपशान्त्यै, शान्तिर्जिनो मे भगवान् शरण्यः ॥८०॥

इति शाति जिन स्तोत्रम् ॥१६॥

कुन्थुप्र भृत्य खिलसत्त्वदयैकतानः, कुन्थुर्जिनो ज्वरजरामरणोपशान्त्यै ।
त्वं धर्म चक्रमिह वर्त्तयसिस्म भूत्यै, भूत्वा पुरा क्षितिपतीश्वरचक्रपाणिः ॥८१॥
तृष्णार्चिषःपरिदहन्ति न शांतिरासा, मिष्टेन्द्रियार्थविभवैः परिवृद्धिरेव ।
स्थित्यैवकाऽयपरितापहरंनिमित्त,मित्यात्मवान्विषयसौख्यपराङ्मुखोऽभूत ॥८२॥

वाह्यं तपः परमदुश्चरमाचरंस्त्व, माध्यात्मिकस्य तपसः परिबृंहणार्थम्।
ध्यानं निरस्य कलुषद्वयमुत्तरस्मिन्, ध्यानद्वये ववृतिषेऽतिशयोपपन्ने ॥८३॥
हुत्वा स्वकर्मकटुक प्रकृतीश्चतस्त्रो, रत्नत्रयातिशय तेजसि जातवीर्य्यः।
विभ्राजिषे सकलवेद विधेर्विनेता, व्यभ्रे यथा वियति दीप्तरुचिर्विवस्वान् ॥८४॥
यस्मान्मुनीन्द्र तव लोकपितामहाद्या, विद्याविभूतिकणिकामपि नाप्नुवन्ति।
तस्माद् भवन्तमजम प्रतिमेय मार्याः, स्तुत्यं स्तुवन्ति सुधियः स्वहितैकतानाः ॥८५॥

इति कुन्थु जिन स्तोत्रम् ॥१७॥

गुणस्तोकं सदुल्लंघ्य तद्बहुत्वकथा स्तुतिः।
आनन्त्यात्ते गुणा वक्तुमशक्यास्त्वयि सा कथम् ॥८६॥
तथापि ते मुनीन्द्रस्य यतो नामापि कीर्तितम्।
पुनाति पुण्यकीर्तेर्नस्ततो ब्रूयाम किञ्चन ॥८७॥
लक्ष्मी विभव सर्वस्वं मुमोक्षोश्चक्र लाञ्छनम्।
साम्राज्यं सार्वभौमं ते जरतृणमिवाभवत् ॥८८॥
तव रूपस्य सौन्दर्यं दृष्ट्वा तृप्तिमनापिवान्।
द्वयक्षः शक्रः सहस्राक्षो बभूव बहुविस्मयः ॥८९॥
मोहरूपो रिपुः पापः कषाय भट साधनः।
दृष्टि सम्पदुपेक्षा स्त्रैस्त्वया धीर पराचितः ॥९०॥
कन्दर्प स्योद्धरो दर्पस्त्रै लोक्य विजयार्जितः।
हेपयामास तं धीरे त्वयि प्रतिहतोदयः ॥९१॥
आयत्यां च तदात्वे च दुःखयोर्निनिरुत्तरा।
तृष्णानदी त्वयोत्तीर्णा विद्यानावा विविक्तया ॥९२॥
अन्तकः क्रन्दको नृणां जन्मज्वरसखा सदा।
त्वामन्तकान्तकं प्राप्य व्यावृत्तः कामकारतः ॥९३॥
भूषावेषा युधत्यागि विद्यादम दया परम्।
रूपमेव तवाचष्टे धीर दोष विनिग्रहम् ॥९४॥
समन्ततोंऽगभासां ते परिवेषेण भूयसा।
तमो बाह्यमपाकीर्णम ध्यात्म ध्यान तेजसा ॥९५॥

सर्वज्ञ ज्योतिषोद् भूतस्तावको महिमोदयः।
कं न कुर्यात् प्रणम्रं ते सत्त्वं नाथ सचेतनम् ॥९६॥
तव वागमृतं श्रीमत्सर्वभाम् भाषा स्वभावकम्।
प्रणीयत्यमृतं यद्वत् प्राणिनो व्यापि संसदि ॥९७॥
अनेकान्तात्म दृष्टिस्ते सती शून्यो विपर्ययः।
ततः सर्वं मृषोक्तं स्यात्तदयुक्तं स्वघाततः ॥९८॥
ये परस्पर खलितोन्निद्राः स्वदोषे भ्रान मीलनः।
तपस्विनस्ते किं कुर्युरपात्रं त्वन्मत श्रियः ॥९९॥
ते तं स्वघातिनं दोषं शमीकर्त्तु मनीश्वराः।
त्वद्द्विषः स्वहनो बालस्तत्त्वावक्त व्यतां श्रिताः ॥१००॥
सदेकनित्य वक्तव्यास्त द्विपक्षाश्च ये नयाः।
सर्वथेति प्रदुष्यन्ति पुष्यन्ति स्यादितीहिते ॥१०१॥
सर्वथा नियमत्यागी यथा दृष्टम पेक्षकः।
स्याच्छब्दस्तावके न्याये नान्येषामात्म विद्विषाम् ॥१०२॥
अनेकान्तोऽप्य नेकान्तः प्रमाण नय साधनः।
अनेकान्तः प्रमाणान्ते तदेकान्तोऽर्पि तान्नयात् ॥१०३॥
इति निरुपम युक्तिशासनः प्रियहितयोग गुणानुशासनः।
अरजिन दमतीर्थ नायकस्त्वमिव सतां प्रतिबोधनायकः ॥१०४॥
मतिगुण विभवानुरूप तस्त्वयि वरदागम दृष्टि रूपतः।
गुणकृशमपि किञ्चनोदितं मम भवतादुरिता शनोदितम् ॥१०५॥

इत्यरजिन स्तोत्रम् ॥१८॥

यस्य महर्षेः सकल पदार्थ प्रत्यवबोधः समजनि साक्षात्।
सामरमर्त्यं जगदपि सर्वं प्राञ्जलि भूत्वा प्रणिपततिस्म ॥१०६॥
यस्य च मूर्तिः कनकमयीव स्वस्फुर दाभाकृत परिवेषा।
वागपि तत्त्वं कथयितुकामा स्यात्पदपूर्वा रमयति साधून् ॥१०७॥
यस्य पुरस्ताद्विगलितमाना न प्रतितीर्थ्या भुवि विवदन्ते।
भूरपि रम्या प्रतिपदभासीज्जात विकोशाम्बुज मृदुहासा ॥१०८॥

यस्य समन्ताज्जिन शिशिरांशोः शिष्यक साधुग्रह विभवोऽभूत् ।
तीर्थमपि स्वं जनन समुद्र त्रासित सत्त्वोत्तरण पथोऽग्रम् ॥१०६॥
यस्य च शुक्लं परम तपोऽग्निर्ध्यान मनंतं दुरित मधाक्षीत् ।
तंजिनसिंहं कृतकरणीयं मल्लिम शल्यं शरण मितोऽस्मि ॥११०॥

इति मल्लिजिन स्तोत्रम् ॥१६॥

अधिगत मुनिसुव्रत स्थितिर्मुनिवृषभो मुनिसुव्रतोऽनघः ।
मुनिपरिषदिनिर्बभौ भवानुडुपरिषत्परिवीतसोमवत् ॥१११॥
परिणत शिखि कण्ठ राग याकृतमदनिग्रहविग्रहाभया ।
भव जिन तपसः प्रसूतया ग्रह परिवेष रुचेव शोभितम् ॥११२॥
शशि रुचिशुचि सुक्तलोहितं सुरभितरं विरजो निजं वपुः ।
तव शिवमति विस्मयं यते यदपि च वाङ्मन सोऽय मीहितम् ॥११३॥
स्थिति जनन निरोध लक्षणं चरमचरं च जगत्प्रतिक्षणम् ।
इति जिन सकलज्ञ लाञ्छनं वचनमिदं वदतां वरस्यते ॥११४॥
दुरितमल कलंक मष्टकं निरुपम योगबलेन निर्दहन् ।
अभव दभव सौख्यवान् भवान् भवतु ममापि भवोप शांतये ॥११५॥

इति मुनि सुव्रत जिन स्तोत्रम् ॥२०॥

स्तुतिः स्तोतुः साधोःकुशलपरिणामाय सतदा, भवेन्मा वास्तुत्यः फलमपि ततस्तस्य चसतः
किमेवं स्वाधीनाज्जगति सुलभे श्रायसपथे, स्तुयान्न त्वां विद्वान्सततमपि पूज्यं नमिजिनम्
त्वया धीमन् ब्रह्मप्रणिधिमनसा जन्मनिगलं, समूलं निर्भिन्नं त्वमसि विदुषां मोक्षपदवी
त्वयि ज्ञानज्योतिर्विभव किरणैर्भाति भगवन्नभूवन् खद्योता इव शुचिरवावन्यमतयः
विधेयं वार्यं चानुभयमुभयं मिश्रमपि तत्, विशेषैः प्रत्येकं नियम विषयैश्चा परिमितैः
सदान्योन्यापेक्षैः सकलभुवन ज्येष्ठगुरुणा, त्वया गीतं तत्त्वं बहुनय विवक्षेतरवशात्
अहिंसा भूतानां जगति विदितं ब्रह्म परमं, न सा तत्रारम्भोस्त्यणुरपि च यत्राश्रमविधौ
ततस्तत्सिध्यर्थं परमकरुणो ग्रन्थमुभयं, भवानेवात्याक्षीन्न च विकृतवेषो पधिरतः
वपुर्भूषावेष व्यवधिरहितं शान्तिकरणं, यतस्ते संचष्टे स्मरशरविषातंक विजयम्
विना भीमैः शस्त्रैरदय हृदयामर्ष विलयं, ततस्त्वं निर्मोहः शरण मसि नः शान्ति निलयः

इति नमिजिन स्तोत्रम् ॥२१॥

भगवानृषिः परमयोगदहन हुतकल्मषेन्धनम् ।
ज्ञानविपुलकिरणैः सकलं प्रतिबुध्य बुद्धःकमलायतेक्षणः ॥१२१॥
हरिवंश केतुरनवद्यविनय दमतीर्थ नायकः ।
शीलजलधिर भवोविभस्त्वमरिष्टनेमि जिनकुञ्जरोऽजरः ॥१२२॥
त्रिदशेन्द्र मौलि मणि रत्नकिरण विसरोप चुम्बितम् ।
पादयुगलममलं भवतो विकसित् कुशेशयदलारुणोदरम् ॥१२३॥
नखचन्द्र रश्मि कवचाति रुचिर शिखरांगुलिस्थलम् ।
स्वार्थनियत मनसः सुधियः प्रणमन्ति मन्त्रमुखरा महर्षय ॥१२४॥
द्यु तिमद्रथांग रविबिम्ब किरणजटिलांशु मण्डलः ।
नील जलज दलराशि वपुः सह बन्धुभिर्गरुड केतुरीश्वरः ॥१२५॥
हलभृच्च ते स्वजन भक्तिमुदित हृदयो जनेश्वरौ ।
धर्मविनय रसिकौ सुतरां चरणारविन्द युगलं प्रणेमतुः ॥१२६॥
ककुदं भुवः खचरयोषिदुषित शिखरैरलंकृतः ।
मेघपटल परिवीततटस्तव लक्षणानि लिखितानि वज्रिणा ॥१२७॥
वहतीति तीर्थमृषिभिश्च सततमभिगम्यतेऽद्य च ।
प्रीति विततहृदयैःपरितो भृशमूर्ज्जयन्त इति विश्रुतोऽचलः ॥१२८॥
वहिरन्तरप्युभयथा च करणमविघाति र्नाथकृर्ता ।
नाथ युगपदखिलं च सदा त्वमिदं तलामलकवद्विवेदिथ ॥१२९॥
अत एव ते बुधनुतस्य चरित गुण मद्भुतोदयम् ।
न्यायविहितमवधार्य जिने त्वयि सुप्रसन्नमनसःस्थिता वयं ॥१३०॥

इत्यरिष्टनेमि जिन स्तोत्रम् ॥२२॥

तमालनीलैः सधनुस्तडिद्गुणैः, प्रकीर्ण भीमाशनिवायुवृष्टिभः ।
बलाह कैर्वैरिवशैरुपद्रु तो, महामना यो न चचाल योगतः ॥१३१॥
वृहत्फणा मण्डल मण्डपेन, यं स्फुरत्तडित्पिगरुचोपसर्गिणाम् ।
जुगूह नागो धरणो धराधरं, विरागसन्ध्यातडिदम्बुदो यथा ॥१३२॥
स्वयोगनिर्स्त्रिश निशातधारया,निशात्य यो दुर्जय मोहविद्विषम् ।
आवापदार्हन्त्यम चिन्त्यमद्भुतं, त्रिलोकपूजातिशयास्पदं पदम् ॥१३३॥

यमीश्वरं वीक्ष्य विधूत कल्मषं, तपोधनास्तेऽपि तथा बुभूषवः।
वनौकसः स्वश्रमबन्ध्यबुद्धयः, शमोपदेशं शरणं प्रपेदिरे ॥१३४॥
स सत्यविद्या तपसां प्रणायकः, समग्रधीरुग्र कुलाम्बरांशुमान्।
मया सदा पार्श्वजिनः प्रणम्यते, विलीन मिथ्यापथदृष्टिविभ्रमः ॥१३५॥

इति पार्श्वजिन स्तोत्रम् ॥२३॥

कीर्त्या भुवि भासि तया वीर, त्वं गुणसमुच्छ्रया भासितया।
भासोडुसभासितया सोम इव, व्योम्नि कुन्द शोभासितया ॥१३६॥
तव जिन शासन विभवो, जयतिकलावपिगुणानुशासनविभवः।
दोषकशासन विभवः स्तुवंति चैनं, प्रभाकृशासन विभवः ॥१३७॥
अनवद्यः स्याद्वादस्तव, दृष्टेष्टा विरोधतः स्याद्वादः।
इतरो न स्याद्वादो सद्वितय विरोधान्मुनीश्वराऽस्याद्वादः ॥१३८॥
त्वमसि सुरासुरमहितो ग्रन्थिक सत्त्वाशय प्रणामामहितः।
लोकत्रय परम हितोऽनावरण ज्योति रुज्वलद्धा महितः ॥१३९॥
सभ्यानामभिरुचितं दधासि गुण भूषणं श्रिया चारु चितम्।
मग्नं स्वस्यां रुचिरं जयसि च मृगलांछनं स्वकान्त्या रुचितम् ॥१४०॥
त्वं जिन गतमदमायस्तव भावानां मुमुक्षुकामदमायः।
श्रेयान् श्रीमदमायस्त्वया समादेशि सप्रयामदमायः ॥१४१॥
गिरभित्त्यवदानवतः श्रीमत इव दन्तिनः श्रवद्दानवतः।
तव शमवादानवतो गतमूर्जितमपगत प्रमादानवतः ॥१४२॥
वहुगुण संपद सकलं परमतमपि मधुरवचन विन्यासकलम्।
नय भक्त्यवतं सकलं तव देव मतं समन्तभद्रं सकलम् ॥१४३॥

इति वीर जिनस्तोत्रम् ॥२४॥

यो निःशेष जिनोक्त धर्म विषयः श्रीगौतमाद्यैः कृतः,
सूक्तार्थैरमलैः स्तवोयमसमः स्वल्पैः प्रसन्नैः पदैः।
तद्व्याख्यानमदो यथाह्यवगतः किञ्चित्कृतं लेशतः,
स्थेयांश्चन्द्र दिवाकरावधि बुधप्रह्लादचेतस्यलम् ॥१४४॥

इति बृहत्स्वयम्भू स्तोत्रम् समाप्तम्।




श्रीमत्कुन्दकुन्दाचार्य विरचिता

# द्वादशानुप्रेक्षा

नत्वा सर्व सिद्धान् ध्यानोत्तम क्षपित दीर्घ संसारान् ।
दश दश द्वौ द्वौ च जिनान् दश द्वौ अनुप्रेक्षा वक्ष्ये ।। १ ।।

अध्रुवम शरण मेकत्व मन्य संसारे लोकम शुचित्वं ।
आस्रव संवर निर्ज्जरा धर्म्म बोधिं च चिन्तयेत् ।। २ ।।

वर भवन यान वाहन शयनासनानि देव मनुजराज्ञाम् ।
मातृ पितृ स्वजन भृत्य सम्बन्धिमश्च पितृव्योऽनित्याः ।। ३ ।।

समग्रेन्द्रिय रूपं आरोग्यं यौवनं बलं तेजः ।
सौभाग्यं लावण्यं सुरधनुरिव शाश्वतं न भवेत् ।। ४ ।।

जलबुद्बुद शक्र धनुःक्षणरुचिघन शोभेवस्थिरं नभवेत् ।
अहमिन्द्र स्थानानि बलदेव प्रभृति पर्यायाः ।। ५ ।।

जीव निबद्धं देहं क्षीरोदक मिव विनश्यति शीघ्रम् ।
भोगोपभोग कारण द्रव्यं नित्यं कथं भवति ।। ६ ।।

परमार्थेन तु आत्मा देवासुर मनुज राज विभवैं ।
व्यतिरिक्तः स आत्मा शाश्वत इति चिन्तयेत् नित्यं ।। ७ ।।

— इत्य ध्रुवानुप्रेक्षा ।।१।। —

मणि मन्त्रौषध रक्षाः हय गज रथाश्च सकल विद्याः ।
जीवानां न हि शरणं त्रिषु लोकेषु मरण समये ।। ८ ।।

स्वर्गो भवेत् हि दुर्गं भृत्या देवाश्च प्रहरणं वज्रं ।
ऐरावणो गजेन्द्रः इन्द्रस्य न विद्यते शरणं ।। ९ ।।

नवनिधिः चतुर्दश रत्नं हयमत्त गजेन्द्र चतुरंग बलम् ।
चक्रेशस्य न शरणं पश्यत कर्दिते कालेन ।।१०।।

जाति जरा मरण रोग भयतः रक्षति आत्मनं आत्मा ।
तस्मादात्मा शरणं बन्धोदय सत्त्व कर्म व्यति रिक्तः ।।११।।

अर्हन्तः सिद्धा आचार्या उपध्यायाः साधवः पञ्च परमेष्टिनः।
ते पि हि तिष्टन्ति आत्मनि तस्मात् आत्मा हि मे शरणम् ॥१२॥
सम्यक्त्वं सद्ज्ञानं सच्चारित्रं च सत्तपश्चैव।
चत्वारि तिष्टन्ति आत्मनि तस्मात् आत्मा हि मे शरणम् ॥१३॥

— इत्यशरणानुप्रेक्षा ॥२॥ —

एकः करोति कर्म एकः हिण्डति च दीर्घ संसारे।
एकः जायते म्रियते च तस्य फलं भुंक्ते एकः ॥१४॥
एकः करोति पापं विषयनि मित्तेन तीव्र लोभेन।
नरक तिर्यक्षु जीवो तस्य फलं भुंक्ते एकः ॥१५॥
एकः करोति पुण्यं धर्म निमित्तेन पात्र दानेन।
मानव देवेषु जीवो तस्य फलं भुंक्ते एकः ॥१६॥
उत्तम पात्रं भणितं सम्यक्त्व गुणेन संयुतः साधुः।
सम्यग्दृष्टिः श्रावको मध्यम पात्रं हि विज्ञेयः ॥१७॥
निर्दिष्टः जिनसमये अविरत सम्यक्त्व जघन्यपात्रं इति।
सम्यक्त्व रत्न रहितः अपात्र मिति संपरीक्षः ॥१८॥
दर्शन भ्रष्टा भ्रष्टा दर्शन भ्रष्टस्य नास्ति निर्वाणम्।
सिद्धयन्ति चरित्र भ्रष्टादर्शनभ्रष्टानसिद्धयन्ति ॥१९॥
एकोऽहं निर्ममः शुद्धः ज्ञान दर्शन लक्षणः।
शुद्धै कत्व मुपादेयं एवं चिन्तयेत संयतः ॥२०॥

इत्येकत्वानुप्रेक्षा ॥३॥

मातृ पितृ सहोदर पुत्र कलत्रादि बन्धु सन्दोहः।
जीवस्य न सम्बन्धो निज कार्य वशेन वर्तन्ते ॥२१॥
अन्यः अन्यं शोचति मदीयोस्तिममनायकइति मन्यमानः।
आत्मनं न हि शोचतिसंसार महार्णवेपतितम् ॥२२॥
अन्यदिदं शरीरादिकं अपियत् भवति बाह्यं द्रव्यम्।
ज्ञानं दर्शनमात्मा एवं चिन्तय अन्यत्वम् ॥२३॥

— इत्यन्यत्वानुप्रेक्षा ॥४॥ —

पंच विधे संसारे जाति जरा मरण रोग भय प्रचुरे।
जिन मार्गम पश्यन् जीवः परिभ्रमति चिरकालम् ॥२४॥
सर्वेऽपि पुद्‌गलाः खलु एकेन भुक्तोञ्झिताहि जीवेन।
असकृदनंत कृत्वः पुद्‌गल परिवर्त संसारे ॥२५॥
सर्वस्मिन् लोक क्षेत्रे क्रमशः तन्नास्ति यत्र न उत्पन्नः।
अवगाहनेन बहुशः परिभ्रमितः क्षेत्र संसारे ॥२६॥
अव सर्पिण्युत्सर्पिणी समया वलिकासु निरवशेषासु।
जातः मृतः च बहुशः परिभ्रमितः काल संसारे ॥२७॥
नरकायुर्जघन्यादिषु यावत् तु उपरितनानि ग्रैवेयिकाणि।
मिथ्यात्व संश्रितेन तु बहुशः अपि भव स्थितौ भ्रमित ॥२८॥
सर्वाः प्रकृति स्थितयोऽनुभाग प्रदेश बन्धस्थानानि।
जीवः मिथ्यात्व वशात् भ्रमितः पुनः भाव संसारे ॥२९॥
पुत्रकलत्रनिमित्तं अर्थ अर्जयति पाप बुद्धया।
परिहरति दया दानं सः जीवःभ्रमति संसारे ॥३०॥
मम पुत्रो मम भार्या मम धन धान्य मिति तीव्र कांक्षया।
त्यक्त्वा धर्म बुद्धि पश्चात् परिपतति दीर्घ संसारे ॥३१॥
मिथ्यात्वोदयेन जीवः निंदन् जैन भाषितं धर्मम।
कुधर्म कुलिगं कुतीर्थ मन्य मानः भ्रमति संसारे ॥३२॥
हत्वा जीव राशि मधु मांसं सेवित्वा सुरापानम्।
पर द्रव्य पर कलत्रं गृहीत्वा च भ्रमति संसारे ॥३३॥
यत्नेन करोति पापं विसयनिमितं च अर्हनिशं जीवः।
मोहान्धकार सहितः तेन तु परिपतति संसारे ॥३४॥
नित्येतर धातु सप्त च तरुदश विकलेन्द्रियेषुषट् चैव।
सुरनारक तिर्यक्चतस्रः चतुर्दश मनुजेशत सहस्राः ॥३५॥
संयोग विप्रयोगं लाभालाभं सुखं च दुःखं च।
संसारे भूतानां भवति हि मानं तथावमानं च ॥३६॥
कर्म निमित्तं जीवः हिंडति संसारे घोर कांतारे।
जीवस्य न संसारः निश्चय नय कर्म निर्मुक्तः ॥३७॥

संसार मति क्रान्तः जीव उपादेय इति विचिन्तयनीयम्।
संसार दुःखा क्रान्तः जीवः सहेय इति विचिन्तनीयम् ॥३६॥
— इति ससारानुप्रेक्षा ॥५॥ —

जीवादि पदार्थानां समवायः स निरुच्यते लोकः।
त्रिविधः भवेत् लोकः अधोमध्य मोर्ध्वं भेदेन ॥३६॥

नरका भवंति अधस्तनै मध्ये द्वीपाम्बुराशयाः असंख्या।
स्वर्गः त्रिषष्टि भेद एतस्मात् उर्ध्वं भवेत मोक्षः ॥४०॥

एकत्रिंशत् सप्त चत्वारि द्वौ एकैकं षट्कं चतुः कल्पे।
त्रित्रिकमेकैकेन्द्र कनामानि ऋज्वादि त्रिषष्टिः ॥४१॥

अशुभेन नरक तिर्यचं शुभोपयोगेन दिविज-नर सौख्यम्।
शुद्धेन लभेत सिद्धि एवं लोकः विचि न्तनीयः ॥४२॥
— इति लोकानुप्रेक्षा ॥६॥ —

अस्थिभिः प्रतिबद्धं मांस विलिप्तं त्वचा अवच्छन्नम्।
क्रिमि संकुलैः भरितं अप्रशस्तं देहं सदाकालम् ॥४३॥

दुर्गंधं वीभत्सं कलि मल भृतं अचेतनं मूर्त्तम्।
स्खलन पतन स्वभावं देहं इति चिन्तयेत् नित्यम् ॥४४॥

रस रुधिर मांस मेदास्थिमज्जा संकुलं मूत्र पूय कृमि बहुलम्।
दुर्गन्धं अशुचि चर्ममयं अनित्यं अचेतनं पतनम् ॥४५॥

देहात् व्यति रिक्तः कर्म विरहितः अनन्त सुख निलयः।
प्रशस्तः भवेत् आत्मा इति नित्यं भावनां कुर्यात् ॥४६॥
— इति अशुचित्वानु प्रेक्षा ॥७॥ —

मिथ्यात्वं अविरमणं कषाय योगाश्च आस्रवा भवन्ति।
पंच पंच चतुःत्रिक भेदाः सम्यक् प्रकीर्तिता समये ॥४७॥

एकान्त विनय विपरीत संशयं अज्ञानं इति भवेत् पञ्च।
अविरमणं हिंसादि पञ्च विधं तत्भवति नियमेन ॥४८॥

क्रोधः मानः माया लोभः अपि च चतुर्विधः कषायः खलु।
मनोवच कायेन पुनः योगः त्रिविकल्प इति जानीहि ॥४६॥

अशुभेतर भेदेन तुएकैकं वर्णितं भवेत् द्विविधम्।
आहारादि संज्ञा अशुभ मनः इति विजानीहि ॥५०॥

कृष्णादितिस्त्रः लेश्याः करणज सौख्येषु गृद्धि परिणामः।
ईर्षा विषाद भावः अशुभ मन इति च जिना ब्रुवन्ति ॥५१॥

राग: द्वेष: मोह: हास्यादि नोकषाय परिणाम: ।
स्थूल: वा सूक्ष्म: वा अशुभ मन इति च जिना ब्रुवन्ति ॥५२॥
भक्तस्त्रीराज चौरकथा: वचनं विजानोहि अशुभमिति ।
बन्धन छेदन मारण क्रिया सा अशुभकाय इति ॥५३॥
मुक्त्वा अशुभ भावं पूर्वोक्तं निर वशेषत: द्रव्यम् ।
व्रत समिति शील संयम परिणामं शुभ मन: जानीहि ॥५४॥
संसारच्छेद कारण वचनं शुभ वचन मितिजिनोद्दिष्टम् ।
जिनदेवादिषु पूजा शुभ कायमिति च भवेत् चेष्टा ॥५५॥
जन्म समुद्रे बहुदोष वीचिके दुःख जल चरा कीर्णे ।
जीवस्य परिभ्रमणं कर्मास्रव कारणं भवति ॥५६॥
कर्मास्रवेण जीव: बूडति संसार सागरे घोरे ।
या ज्ञानवशा क्रिया मोक्ष निमित्तं परम्परया ॥५७॥
आस्रव हेतो: जीव: जन्म समुद्रे निमज्जतिक्षिप्रम् ।
आस्रव क्रिया तस्मात् मोक्ष निमित्तं न चिन्तनीया ॥५८॥
पारम्पर्येण तु आस्रव क्रियया नास्ति निर्वाणम् ।
संसार गमण कारण मिति निन्द्यं आस्रवं जानीहि ॥५९॥
पूर्वोक्तास्रव भेदा: निश्चयनयेन न सन्ति जीवस्य ।
उभयास्रव निर्मुक्तं आत्मानं चिन्तयेत् नित्यं ॥६०॥

— इत्यास्रवानुप्रेक्षा ॥८॥ —

चलमलिनम गाढं च वर्जयित्वा सम्यक्त्व दृढ कपाटेन ।
मिथ्यात्वास्रव द्वारनिरोध: भवति इतिजिनै: निर्दिष्टम् ॥६१॥
पंचमहाव्रत मनसाअविरमण निरोधनं भवेत् नियमात् ।
क्रोधादि आस्रवाणां द्वाराणि कषाय रहित परिणामै: ॥६२॥
शुभयोगेषु प्रवृत्ति: संवरणं करोति अशुभ योगस्य ।
शुभयोगस्य निरोध: शुद्धोपयोगेन सम्भवति ॥६३॥
शुद्धोपयोगेन पुन: धर्म शुक्लं च भवति जीवस्य ।
तस्मात् संवर हेतु: ध्यानमिति विचिन्तयेत् नित्यम् ॥६४॥
जीवस्य न संवरण परमार्थ नयेन शुद्ध भावात् ।
सवर भाव विमुक्तं आत्मानं चिन्तयेत् ॥६५॥

— इति सवरानुप्रेक्षा ॥९॥ —

बन्ध प्रदेश गलनं निर्ज्जरणं इति जिनैः प्रज्ञप्तं।
येन भवेत्संवरणं तेन तु निर्ज्जरण मिति जानीहि ॥६६॥
सा पुनः द्विविधा ज्ञेया खकालपक्वा तपसा क्रियमाणा।
चतुर्गति कानां प्रथमा व्रत युक्तानां भवेत् द्वितीया ॥६७॥
—इति निर्जरानुप्रेक्षा ॥१०॥—
एकादश दश भेदो धर्मो सम्यक्त्व पूर्वको भणितः।
सागारा नगाराणां उत्तम मुख सम्प्रयुक्तैः ॥६८॥
दर्शन व्रत सामायिक प्रोषध सचित्त रात्रि भुक्ताः च।
ब्रह्मारंभ परिग्रहानुमतोद्दिष्टा देश विरतस्यैते ॥६९॥
उत्तम क्षमा मार्दवार्जवसत्यशौचं संयमःच तपस्त्यागं।
आकिञ्चन्यं ब्रह्म इति दशविधं भवति ॥७०॥
क्रोधोत्पत्तेः पुनः बहिरंग यदि भवेत् साक्षात्।
न करोति किञ्चिदपि क्रोधं तस्य क्षमा भवतिधर्मइति ॥७१॥
कुल रूप जाति बुद्धिषु तप श्रुत शीलेषु गर्व किञ्चित्।
यः नैव करोति श्रमणो मार्दव धर्मो भवेत् तस्य ॥७२॥
मुक्त्वा कुटिल भावं निर्मल हृदयेन चरति यः श्रमणः।
आर्जव धर्मः तृतीयः तस्य तु संभवति नियमेन ॥७३॥
पर संतापक कारण वचनं मुक्त्वा स्वपरहित् वचनम्।
यः वदति भिक्षुः तुरीयः तस्य तु धर्म भवेत् सत्यम् ॥७४॥
कांक्षा भाव निवृति कृत्वा वैराग्य भावना युक्तः।
यः वर्तते परम मुनिः तस्य तु धर्मः भवेत् शौचम् ॥७५॥
व्रत समिति पालनेन दण्ड त्यागेन इन्द्रिय जयेन।
परिणम मानस्य पुनः संयम धर्मः भवेत् नियमात् ॥७६॥
विषय कषायविनिग्रह भावं कृत्वा ध्यान स्वाध्या येन।
यः भावयति आत्मनं तस्य तपः भवति नियमेन ॥७७॥
निर्वेगत्रिकं भावयेत् मोहं त्यक्त्वा सर्व द्रव्येषु।
यः तस्य भवेत् त्याग इति भणितं जिन वरेन्द्रैः ॥७८॥

भूत्वा च निस्सङ्गः निज भावं निगृह्य सुख दुःख दम्।
निर्द्वन्देन तु वर्तते अनागारः तस्याकिञ्चन्यम् ।।७९।।
सर्वाङ्ग पश्यन् स्त्रीणाँ तासु मुञ्चति दुर्भावम्।
स ब्रह्मचर्य्यभावं सुकृतो खलु दुर्द्धरं धरत्ति ।।८०।।
श्रावक धर्म त्यक्त्वा यति धर्मे यः हि वर्त्तते जीवः।
स न च वर्ज्जतिमोक्षं धर्म्ममिति चिन्तयेत् नित्यम् ।।८१।।
निश्चय नयेन जीवः सागारा नागार धर्मतः भिन्नः।
मध्यस्थ भावनया शुद्धात्मानं चिन्तयेत् नित्यम् ।।८२।।
इति धर्मानुप्रेक्षा ।।११।।
उत्पद्यते सद्ज्ञानं येन उपायेन तस्योपायस्य।
चिन्ताः भवेत् बोधिः अत्यन्तं दुर्ल्लभं भवति ।।८३।।
कर्मोदय जपर्याया हेयं क्षायोपशमिकज्ञानं खलु।
स्वकद्रव्य मुपादेयं निश्चितः भवतिः सद्ज्ञानम् ।।८४।।
मूलोत्तर प्रकृतयः मिथ्यात्वादयः असंख्य लोकपरिमाणाः।
परद्रव्यं स्वकद्रव्यं आत्मा इति निश्चयनयेन ।।८५।।
एवं जायते ज्ञानं हेयोपादेयं निश्चयेन नास्ति।
चिन्तयेत् मुनिः बोधिं संसारविरमणार्थं च ।।८६।।
इति बोध्यनुप्रेक्षा ।।१२।।
द्वादशानुप्रेक्षाः प्रत्याख्यानं तथैव प्रतिक्रमणम्।
आलोचनं समाधिः तस्मात् भावयेत् अनुप्रेक्षाम् ।।८७।।
रात्रिंदिव प्रतिक्रमणं प्रत्याख्यानं समाधिं सामायिकम्।
आलोचनां प्रकुर्यात् यदि विद्यते आत्म नः शक्तिः ।।८८।।
मोक्ष गता ये पुरुषा अनादिकालेन द्वादशानुप्रेक्षाम्।
परिभाव्य सम्यक् प्रणमामि पुनः पुनः तान् ।।८९।।
किं प्रलपिते न बहुना ये सिद्धा नरवरा गते काले।
सेत्स्यन्ति येऽपि भविकाः तद् जानीहि तस्याः माहात्म्यम् ।।९०।।
इति निश्चय व्यवहारं यत् भणितं कुन्दकुन्दमुनिनाथेन।
यः भावयति शुद्धमनाः स प्राप्नोति परमनिर्वाणम् ।।९१।।
इति कुन्दकुन्दाचार्य विरचिता द्वादशानुप्रेक्षा ।।९।।




आचार्य श्रीमदुमास्वामि विरचितं
तत्त्वार्थाधिगम मोक्ष शास्त्रम्

# तत्त्वार्थ सूत्रं

मोक्षमार्गस्य नेतारं, भेत्तारं कर्मभूभृताम्।
ज्ञातारं विश्वतत्त्वानां, वन्दे तत्गुणलब्धये ॥१॥

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥१॥ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥२॥ तन्निसर्गादधिगमाद्वा ॥३॥ जीवा जीवास्रव बन्ध संवर निर्ज्जरा मोक्षास्तत्त्वम् ॥४॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥५॥ प्रमाणनयैरधिगमः ॥६॥ निर्देशस्वामित्वसाधनाऽधिकरण स्थितिविधानतः ॥७॥ सत्संख्याक्षेत्रस्पर्शन-कालान्तरभावाल्पबहुत्वैश्च ॥८॥ मतिश्रुतावधिमनः पर्ययकेवलानि ज्ञानम् ॥९॥ तत्प्रमाणे ॥१०॥ आद्ये परोक्षम् ॥११॥ प्रत्यक्षमन्यत् ॥१२॥ मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् ॥१३॥ तदिन्द्रियानिन्द्रयनिमित्तम् ॥१४॥ अवग्रहे-हावायधारणाः॥१५॥ बहुबहुविधक्षिप्राऽनिःसृताऽनुक्तध्रुवाणां सेतराणाम् ॥१६॥अर्थस्य ॥१७॥व्यञ्जनस्यावग्रहः॥१८॥न चक्षुरनिन्द्रियाभ्याम्॥१९॥श्रुतं मतिपूर्वं द्व्यनेकद्वाद-शभेदम् ॥२०॥ भवप्रत्ययोऽवधिर्देवनारकाणाम् ॥२१॥ क्षयोपशमनिमित्तः षड्विकल्पः शेषाणाम् ॥२२॥ ऋजुविपुलमती मनःपर्ययः ॥२३॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥२४॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्य्ययोः ॥२५॥ मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु ॥२६॥ रूपिष्ववधेः ॥२७॥ तदनन्तभागे मनःपर्ययस्य ॥२८॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥२९॥ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥३०॥ मतिश्रुतावधयो विपर्ययश्च ॥३१॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥३२॥ नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः ॥३३॥

इति तत्त्वार्थधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः ॥१॥

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥१॥ द्विनवाष्ठादशैकविंशति त्रिभेदा यथाक्रमम् ॥२॥ सम्यक्त्वचारित्रे ॥३॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥४॥ ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपञ्च-भेदाः सम्यक्त्वचारित्र संयमासंयमाश्च ॥५॥ गतिकषायलिंगमिथ्यादर्शनाऽज्ञाना-

ऽसंयताऽसिद्ध लेश्याश्चतुश्च तुस्त्र्येकैकैकैक षड् भेदाः ।।६।। जीव भव्याऽभव्यत्वानि च ।।७।। उपयोगो लक्षणं ।।८।। स द्विविधोऽष्टचतुर्भेदः ।।९।। संसारिणो मुक्ताश्च ।।१०।। समनस्काऽमनस्काः ।।११।। संसारिणस्त्रसस्थावराः ।।१२।। पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ।।१३।। द्वींद्रियादयस्त्रसाः ।।१४।। पंचेंद्रियाणि ।।१५।। द्विविधानि ।।१६।। निर्वृत्त्युपकरणे द्रव्येंद्रियं ।।१७।। लब्ध्युपयोगो भावेंद्रियं ।।१८।। स्पर्शनरसनघ्राणचक्षुः श्रोत्राणि ।।१९।। स्पर्शरस गंधवर्ण शब्दास्तदर्थाः ।।२०।। श्रुतमनिंद्रियस्य ।।२१।। वनस्पत्यंतानामेकं ।।२२।। कृमिपिपीलिका भ्रमर मनुष्यादीना मेकैकवृद्धानि ।।२३।। संज्ञिनः समनस्काः ।।२४।। विग्रहगतौ कर्मयोगः ।।२५।। अनु-श्रेणि गतिः ।।२६।। अविग्रहा जीवस्य ।।२७।। विग्रहवती च संसारिणः प्राक्चतुर्भ्यः ।।२८।। एकसमयाऽविग्रहा ।।२९।। एकं द्वौ त्रीन्वानाहारकः ।।३०।। संमूर्छनगर्भोपपादा जन्म ।।३१।। सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ।।३२।। जरायुजाण्डजपो तानां गर्भः ।।३३।। देवनारकाणामुपपादः ।।३४।। शेषाणां सम्मूर्छनं ।।३५।। औदारिक वैक्रियिकाहारकतैजसकार्मणानि शरीराणि ।।३६।। परं परं सूक्ष्मं ।।३७।। प्रदेशतो-ऽसंख्येय गुणं प्राक्तैजसात् ।।३८।। अनंतगुणे परे ।।३९।। अप्रतीघाते ।।४०।। अनादि संबंधे च ।।४१।। सर्वस्य ।।४२।। तदादीनि भाज्यानि युगपदे कस्मिन्नाचतुर्भ्यः ।।४३।। निरुपभोगमंत्यं ।।४४।। गर्भसंमूर्छनजमाद्यं ।।४५।। औपपादिकं वैक्रियिकं ।।४६।। लब्धिप्रत्ययं च ।।४७।। तैजसमपि ।।४८।। शुभं विशुद्धमव्याघाति चाहारकं प्रमत्त संयतस्यैव ।।४९।। नारकसंमूर्छिनो नपुंसकानि ।।५०।। न देवाः ।।५१।। शेषास्त्रिवेदाः ।।५२।। औपपादिक चरमोत्तम देहाःसंख्येय वर्षायुषोऽनपवर्त्यायुषः ।।५३।।

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे द्वितीयोऽध्याय ।।२।।

रत्नशर्कराबालुकापंक धूमतमो महातमः प्रभा भूमयो घनांबुवाताकाशप्रतिष्ठाः सप्ताऽधोऽधः ।।१।। तासु त्रिंशत्पंचविंशति पंच दशदश त्रिपंचोनैकनर कशत सहस्राणि पंच चैव यथाक्रमं ।।२।। नारका नित्याशुभतर लेश्या परिणाम देह वेदनाविक्रियाः ।।३।। परस्परोदीरित दुःखाः ।।४।। संक्लिष्टासुरो दीरित दुःखाश्च प्राक् चतुर्थ्याः ।।५।। तेष्वेकत्रिसप्तदशसप्त दशद्वाविंश तित्रयस्त्रिंशत्सागरोपमा सत्वानां परा स्थितिः ।।६।। जंबूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ।।७।। द्विर्द्विर्विष्कंभाः पूर्वपूर्वपरिक्षे पिणो वलयाकृतयः ।।८।। तन्मध्य मेरुनाभिर्वृत्तो योजन शत सहस्त्रविष्कंभो जंबूद्वीपः।।९।।

भरत हैमवत हरिविदेह रम्यक हैरण्य वतैरावत वर्षाः क्षेत्राणि ॥१०॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिम वन्निषधनील रुक्मिशिखरिणो वर्षधरपर्वताः ॥११॥ हेमार्ज्जुनतपनीयवैडूर्य रजतहेममयाः ॥१२॥ मणिविचित्रपार्श्वा उपरि मूले च तुल्य विस्ताराः ॥१३॥ पद्ममहापद्मतिगिञ्छकेसरि महापुण्डरीकपुण्डरीका ह्रदास्तेषामुपरि ॥१४॥ प्रथमो योजनसहस्रायामस्त दर्द्ध विष्कम्भो ह्रदः ॥१५॥ दशयोजनावगाहः ॥१६॥ तन्मध्ये योजनं पुष्करम् ॥१७॥ तद्विगुणद्विगुणा ह्रदा पुष्कराणि च ॥१८॥ तन्निवासिन्योदेव्यः श्रीह्रीधृतिकीर्ति बुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिक परिषत्काः ॥१९॥ गंगासिन्धुरोहिद्रोहितास्य। हरिद्धरिकान्ता सीतासीतोदानारीनरकान्तासुवर्ण रूप्यकूलारक्तारक्तोदाः सरिस्तन्मध्यगाः ॥२०॥ द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥२१। शेषास्त्वपरगाः ॥२२॥ चतुर्दश नदी सहस्र परिवृता गंगासिन्ध्वादयो नद्यः ॥२३॥ भरतः षड्विंशति पञ्चयोजनशत विस्तारः षट्चैकोनविंशतिभागा योजनस्य ॥२४॥ तद्विगुणद्विगुणविस्तारा वर्षधरवर्षा विदेहान्ताः ॥२५॥ उत्तरा दक्षिणतुल्याः ॥२६॥भरतैरावतयोर्वृद्धिह्रासौ षट्समयाभ्यामुत्सर्प्पिण्यवसर्पिणीभ्याम् ॥२७॥ ताभ्यामपरा भूमयोऽवस्थिताः ॥२८॥ एकद्वित्रिपल्योपमस्थितयो हैमवतक हारि वर्षकदैव कुरुवकाः ॥२९॥ तथोत्तरा ॥३०॥ विदेहेषु संख्येयकालाः ॥३१॥ भरतस्य विष्कम्भो जम्बूद्वीपस्य नवतिशतभागः ॥३२॥ द्विर्धातकीखण्डे ॥३३॥ पुष्करार्द्धे च ॥३४॥ प्राङ् मानुषोत्तरान्मनुष्याः ॥३५॥ आर्य्या म्लेच्छाश्च ॥३६॥ भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥३७॥ नृस्थिती परावरे त्रिपल्योपमान्तमुहूर्ते ॥३८॥ तिर्यग्योनिजानां च ॥३९॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे तृतीयोऽध्यायः ॥३॥

देवाश्चतुर्णिकायाः ॥१॥ आदितस्त्रिषु पीतान्तलेश्याः ॥२॥ दशाष्टपञ्चद्वादश विकल्पाः कल्पोपपन्नपर्य्यन्ताः ॥३॥ इन्द्रसामानिकत्रायस्त्रिंशत्पारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः ॥४॥ त्रायस्त्रिंशलोकपालवर्ज्याव्यन्तरजोतिष्काः ॥५॥ पूर्वयोर्द्वीन्द्राः ॥६॥ कायप्रवीचारा आऐशानात् ॥७॥ शेषाः स्पर्शरूप शब्दमनः प्रवीचाराः ॥८॥ परेऽप्रवीचाराः ॥९॥ भवन वासिनोसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीप दिक्कुमाराः ॥१०॥ व्यन्तराः किन्नरकिम्पुरुष महोरगगन्धर्वयक्षराक्षस भूतपिशाचाः ॥११॥ ज्योतिष्काः सूर्य्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥१२॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥१३॥ तत्कृतः कालविभागः ॥१४॥ बहिरवस्थिताः ॥१५॥ वैमानिकाः ॥१६॥ कल्पोपपन्नाः कल्पातीताश्च ॥१७॥

उपर्युपरि ॥१८॥ सौधर्म्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्टशुक्रमहा शुक्रशतारसहस्रारेष्वानत प्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजन्तजयन्तापराजितेषु सर्वार्थसिद्धौ च ॥१९॥ स्थितिप्रभावसुखद्युतिलेश्या विशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥२०॥ गति शरीरपरिग्रहाभिमानतो हीनाः ॥२१॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥२२॥ प्राग्ग्रैवेयकेभ्यः कल्पाः ॥२३॥ ब्रह्मलोकालया लौकान्तिकाः ॥२४॥ सारस्वादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥२५॥ विजयादिषु द्विचरमाः ॥२६॥ औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥२७॥ स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिपल्योपमार्द्धहीनमिताः ॥२८॥ सौधर्मैशानयोः सागरोपमे ऽधिके ॥२९॥ सानत्कुमारमाहेन्द्रयोः सप्त ॥३०॥ त्रिसप्तनवैकादशत्रयोदशपञ्चदशभिरधिकानि तु ॥३१॥ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेष् विजियादिषुसर्वार्थसिद्धौ च ॥३२॥ अपरा पल्योपममधिकम् ॥३३॥ परतः परतः पूर्वा पूर्वानन्तराः ॥३४॥ नारकाणां च द्वितीयादिषु ॥३५॥ दशवर्षसहस्राणि प्रथमायाम् ॥३६॥ भवनेषु च ॥३७॥ व्यन्तराणां च ॥३८॥ परापल्योपममधिकं ॥३९॥ ज्योतिष्काणां च ॥४०॥ तदष्ट भागोऽपरा ॥४१॥ लौकान्तिकानामष्टौ सागरोपमाणि सर्वेषाम् ॥४२॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे चतुर्थोऽध्याय ॥४॥

अजीवकायाधर्म्माधर्म्माकाशपुद्गलाः ॥१॥ द्रव्याणि ॥२॥ जीवाश्च ॥३॥ नित्यावस्थितान्यरूपाणि ॥४॥ रूपिणः पुद्गलाः ॥५॥ आ आकाशादेकद्रव्याणि ॥६॥ निष्क्रियाणि च ॥७॥ असङ्ख्येयाः प्रदेशाः धर्म्माधर्म्मैकजीवानाम् ॥८॥ आकाशस्यानन्ताः ॥९॥ संङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥१०॥नाणोः ॥११॥ लोकाकाशेऽवगाहः ॥१२॥ धर्म्माधर्म्मयोः कृत्स्ने ॥१३॥ एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥१४॥ असङ्ख्येय भागादिषुजीवानाम् ॥१५॥ प्रदेशसंहारविसर्प्पाभ्यां प्रदीपवत् ॥१६॥ गतिस्थित्युपग्रहो धर्म्माधर्म्मयोरुपकारः ॥१७॥ आकाशस्यावगाहः ॥१८॥ शरीरवाङ्मनः प्राणापानाः पुद्गलानाम् ॥१९॥ सुखदुःखजीवितमरणोपग्रहाश्च ॥२०॥ परस्परोपग्रहो जीवानाम् ॥२१॥ वर्त्तनापरिणामक्रियापरत्वापरत्वे च कालस्य ॥२२॥ स्पर्शरसगन्धवर्णवन्तः पुद्गला ॥२३॥ शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाऽऽतपोद्योतवन्तश्च ॥२४॥ अणवस्कन्धाश्च ॥२५॥ भेदसंघातेभ्य उत्पद्यन्ते ॥२६॥ भेदादणुः ॥२७॥ भेदसंघाताभ्यां चाक्षुषः ॥२८॥ सद्द्रव्यलक्षणम् ॥२९॥

